विवक्षायां भविष्यन्ति ॥ (सू) ह्वावामश्च । ३ । २ । २ । अण् स्यात् कापवादः । स्वर्गह्वायः । तन्तुवायः । धान्यमायः ॥ (सू) आतोऽनुपसर्गे कः । ३ । २ । ३ ॥ आदन्ताद्धातोरनुपसर्गात्कर्मण्युपपदे कः स्यात् नाऽण् । आतो लोपः । गोदः । पार्ष्णित्रम् । अनुपसर्गे किम् । गोसन्दायः ॥ (वा) कविधौ सर्वत्र प्रसारणिभ्यो डः ॥ ब्रह्म जिनाति ब्रह्मज्यः । सर्वत्र ग्रहणात् १ आतश्चोपसर्गे । आह्वः । प्रह्वः ॥ (सू) सुपि स्थः । ३ । २ । ४ । सुपीति योगो विभज्यते । सुपि उपपदे आदन्तात्कः स्यात् । द्वाभ्यां पिबतीति द्विपः । समस्थः । विषमस्थः ॥ ततः–स्थः । सुपि तिष्ठतेः कः स्यादारम्भसामर्थ्याद्भावे । आखूनामुत्थानमाखूत्थः (सू) प्रष्ठोऽग्रगामिनि । ८ । ३ । ९२ । प्रतिष्ठित इति प्रष्ठो गौः । अग्रतो गच्छतीत्यर्थः । अग्रेति किम् । प्रस्थः ॥ (सू) अम्बाम्बगोभूमिसव्यापद्वित्रिकुशेकुशङ्क्वङ्गुमञ्जिपुञ्जिपरमेबर्हिर्दिव्यग्निभ्यः स्थः । ८ । ३ । ९७ । स्थ इति कप्रत्ययान्तस्यानुकरणम् । पष्ठ्यर्थे प्रथमा । एभ्यः स्थस्य सस्य षः स्यात् । द्विष्ठः । त्रिष्ठः ॥ इत ऊर्ध्वं कर्मणि सुपीति द्वयमप्यनुवर्तते । तत्राकर्मकेषु सुपीत्यस्य सम्बन्धः ॥ (सू) तुन्दशोकयोः परिमृजापनुदोः ।३।२।५। तुन्दशोकयोः कर्मणोरुपपदयोराभ्यां कः स्यात् ॥ (वा) आलस्यसुखाहरणयोरिति वक्तव्यम् ॥ तुन्दं परिमार्ष्टीति तुन्दपरिमृजोऽलसः । शोकापनुदः सुखस्याहर्ता । अलसादन्यत्र तुन्दपरिमार्ज एव । यश्च संसारासारत्वोपदेशेन शोकमपनुदति स शोकापनोदः ॥ (वा) कप्रकरणे मूलविभुजादिभ्य उपसंख्यानम् ॥ मूलानि विभुजति मूलविभुजो रथः । आकृतिगणोऽयम् । महीध्रः । कुध्रः । गिलतीति गिलः ॥ (सू) प्रे दाज्ञः ।३।२।६। दारूपाज्जानातेश्च प्रोपसृष्टात्कर्मण्युपपदे कः स्यात् । अणोऽपवादः । सर्वप्रदः । पथिप्रज्ञः । अनुपसर्ग इत्युक्तेः प्रादन्यस्मिन्सुपि न कः—गोसम्प्रदायः ॥ (सू) समि ख्यः । ३ । २ । ७ । गोसंख्यः ॥ (सू) गापोष्टक् । ३ । ३ । ८ । अनुपसृष्टाभ्यामाभ्यां टक् स्यात्कर्मण्युपपदे । सामगः । सामगी । उपसर्गे तु–सामदिति

---

दिति ॥ ह्वावामश्च । कापवाद इति ॥ 'आतोनुपसर्गे' इति प्राप्तिर्बोध्या ॥ स्वर्गह्वाय इत्यादि । ह्वेञ्वेञोः 'आदेच' इत्यात्वे 'आतो युक्' इति युक् । 'माङ् माने' 'मेङ् प्रणिदाने' अनयोरिह ग्रहणं, न तु 'मा माने' इत्यस्य, अकर्मकत्वात् ॥ कविधानस्य फलमाह–आतो लोप इति ॥ पार्ष्णित्रमिति । पार्ष्णिं त्रायत इति 'त्रैङ् पालने' ॥ गोसंदाय इति । अण् युक् ॥ प्रसारणिभ्य इति । प्रसारणमिति संप्रसारणपर्यायः ॥ जिनातीति । 'ज्या वयोहानौ' । 'क्र्यादिभ्यः' इति–श्नाप्रत्यये 'ग्रहिज्या–' इति संप्रसारणे पूर्वरूपे 'हलः' इति दीर्घे च कृते 'प्वादीनाम्' इति ह्रस्वः ॥ ब्रह्मज्य इति । डित्त्वसामर्थ्यादभस्यापि टेर्लोपः । पूर्वेण के हि सति कित्त्वात्संप्रसारणादौ च ब्रह्मजिय इति स्यात् ॥ आह्व प्रह्व इति । के हि सति 'वचिस्वपि–' इत्यादिना ह्वेञः संप्रसारणे सत्याहुवः प्रहुव इति स्यादिति बोध्यम् ॥ सुपि स्थः । सुपिति प्रत्याहारो गृह्यते न तु सप्तमीबहुवचनं, कृत्रिमाकृत्रिमयोः कृत्रिमस्यैव ग्रहणात् ॥ आरम्भसामर्थ्यादिति । कर्तरि पूर्वेणैव सिद्धत्वादिह 'कर्तरि कृत्' इति न संबध्यते । अनिर्दिष्टार्थाश्च स्वार्थे । धातोः स्वार्थो भाव एव ॥ नन्वेवं 'घञर्थे कविधानम्' इत्यनेन गतार्थतेति चेत् । न, वार्तिकं दृष्ट्वा सूत्रकृतोऽप्रवृत्तेः । किंच, 'षष्ठी' इति सूत्रेण पाक्षिकसमासे प्रसक्ते 'उपपदमतिङ्' इति नित्यसमासार्थमिदम् । अत एव ल्युडन्तेनाऽस्वपदविग्रहमाह–आखूनामुत्थानमिति ॥ नन्वेवं 'घञर्थे कविधाने स्थास्नापाव्यधिहनियुध्यर्थम्' इति वार्तिके स्थाग्रहणं व्यर्थमिति चेद् । अत्राहुः– अकर्तरि कारके विधानार्थं तत्र स्थाग्रहणमिति ॥ आखूत्थ इति । स्था इत्यस्य के परे 'आतो लोपः' इत्यालोपः 'उदः स्थास्तम्भोः' इति उदः परस्य थः, उदो दस्य चर्त्वम् । अत्र प्राचा आखूत्थं वर्तते इति नपुंसके पठितं, तदुपेक्ष्यमिति मनोरमायामुक्तम् । भाष्यादौ सर्वत्र पुँल्लिङ्गस्यैव उदाहृतत्वात् । 'ल्युः कर्तरीमनिज् भावे कोघोः किः प्रादितोऽन्यतः' इत्यमरकोशे भावे कस्य पुंस्त्वविधानात् 'भावे नणकचिद्भयोन्येः' इति नपुंसकविधाने कस्य पर्युदासाच्चेति नणकचिद्भ्य इत्यत्र चकार इत्यस्य स चेत् नश्च णश्च कश्च चिच्च नणकचितस्तेभ्योन्य इति विग्रहः॥ अम्बाम्ब–कप्रत्ययान्तेति । तेन भूमिस्थितम् । गोस्थानमित्यादौ नेति भावः। प्राचा तु स्थस्य सस्येति व्याख्यातव्ये स्थःसस्येति व्याख्यातं तदाकर विरोधेन कप्रत्ययान्तस्येत्यध्याहृत्य व्याख्येयम्॥ द्विष्ठः त्रिष्ठ इति । द्वयोस्तिष्ठतीत्यादिविग्रहः । एवमम्बष्ठः, आम्बष्ठः, गोष्ठः, भूमिष्ठः, सव्यष्ठः, अपष्ठः, कुशेष्ठः, कुष्ठः, शङ्कुष्ठः, अङ्गुष्ठः, मञ्जिष्ठः, पुञ्जिष्ठः, परमेष्ठः, बर्हिष्ठः, दिविष्ठः, अग्निष्ठः ॥ आभ्यामिति । परिमृजापनुदाभ्यामित्यत्र पञ्चम्यर्थे षष्ठीति भावः ॥ तुन्दपरिमृज इति । अत्र 'मृजेरजादौ' इति वैकल्पिकी वृद्धिर्व्यवस्थितविभाषया नेत्येके । स्यादेवेत्यन्ये ॥ मूलविभुजादिभ्य इति । तादर्थ्ये एषा चतुर्थी । मूलविभुजादिसिद्ध्यर्थमित्यर्थः ॥ प्रे दा– गामादाग्रहणेष्वविशेषादाह–दारूपादिति ॥ पथिप्रज्ञ इति । पन्थानं प्रकर्षेण जानातीत्यर्थः ॥ प्रादन्यस्मिन्निति । प्रशब्दमात्रोपपदे अस्य सूत्रस्य चरितार्थत्वादुपसर्गान्तरे सति 'आतोऽनुपसर्गे' इत्यनेनापि न भवतीति भावः ॥ गोसंख्य इति । गाः संचष्टे इति विग्रहः । 'चक्षिङः ख्याञ्' । 'ख्या प्रकथने' इत्यस्य तु संपूर्वस्य प्रयोगो नास्तीति न्यासकारः । सार्वधातुकमात्रविषयोऽसौ धातुरिति च मनोरमादौ स्थितम् ॥ गापोष्टक् । इह गामादाग्रहणेष्वविशेषेऽपि गायतेरेव ग्रहणं, न तु 'गाङ् गतौ' 'गा स्तुतौ' इत्यनयोः, अनभिधानात् ॥ सामगः । सामगीति ।

---

१ मूलविभुज, नखमुच, काकगुह, कुमुद, महीध्र, कुध्र, गिल, आकृतिगणोऽयम् ॥ २ सार्वधातुकेति–तथा सति 'न ख्याव्या–' इति सूत्रे ख्याग्रहणं व्यर्थं स्यादिति प्रागुक्तं न विस्मर्तव्यम् ॥

सञ्ज्ञायः ॥ (वा) पिबतेः सुराशीध्वोरिति वाच्यम् ॥ सुरापी । शीधुपी । अन्यत्र क्षीरपा ब्राह्मणी । सुरां पाति रक्षतीति सुरापा ॥ (सू) हरतेरनुद्यमनेऽच् । ३ । २ । ९ । अंशहरः । अनुद्यमने किम् । भारहरः ॥ (वा) शक्तिलाङ्गलाङ्कुशतोमरयष्टिघटघटीधनुष्षु ग्रहेरुपसंख्यानम् ॥ शक्तिग्रहः । लाङ्गलग्रहः ॥ (वा) सूत्रे च धार्यर्थे ॥ सूत्रग्रहः । यस्तु सूत्रं केवलमुपादत्ते न तु धारयति तत्र अणेव । सूत्रग्राहः ॥ (सू) वयसि च । ३।२।१०। उद्यमनार्थं सूत्रम् । कवचहरः कुमारः ॥ (सू) आङि ताच्छील्ये । ३ । २ । ११ । पुष्पाण्याहरति तच्छीलः पुष्पाहरः । ताच्छील्ये किम् । भारहारः ॥ (सू) अर्हः । ३ । २ । १२ । अर्हतेरच् स्यात्कर्मण्युपपदे । अणोऽपवादः । पूजार्हा ब्राह्मणी ॥ (सू) स्तम्बकर्णयो रमिजपोः । ३ । २ । १३ । (वा) हस्तिसूचकयोरिति वक्तव्यम् ॥ स्तम्बे रमते स्तम्बेरमो हस्ती । तत्पुरुषे कृतीति । हलदन्तादिति वा ङेरलुक् । कर्णेजपः सूचकः ॥ (सू) शमि धातोः संज्ञायाम् । ३ । २ । १४ । शम्भवः । शंवदः । पुनर्धातुग्रहणं बाधकविषयेऽपि प्रवृत्त्यर्थम् । कृञो हेत्वादिषु टो मा भूत् । शङ्करा नाम परिव्राजिका तच्छीला च ॥ (सू) अधिकरणे शेतेः । ३ । २ । १५ । खे शेते खशयः ॥ (वा) पार्श्वादिषूपसंख्यानम् ॥ पार्श्वाभ्यां शेते पार्श्वशयः । पृष्ठशयः । उदरेण शेते उदरशयः ॥ (वा) उत्तानादिषु कर्तृषु ॥ उत्तानः शेते उत्तानशयः । अवमूर्धशयः । अवनतो मूर्धा यस्य सः अवमूर्धा अधोमुखः शेते इत्यर्थः ॥ (वा) गिरौ डश्छन्दसि ॥ गिरौ शेते गिरिशः । कथं तर्हि गिरिशमुपचचार प्रत्यहं सा सुकेशीति । गिरिरस्यास्तीति विग्रहे लोमादित्वाच्छः ॥ (सू) चरेष्टः । ३ । २ । १६ । अधिकरणे उपपदे । कुरुचरः । कुरुचरी ॥ (सू) भिक्षासेनादायेषु च । ३ । २ । १७ । भिक्षां चरतीति भिक्षाचरः । सेनाचरः । आदायेति ल्यबन्तम् । आदायचरः ॥ कथं प्रेक्ष्य स्थितां सहचरीमिति । पचादिषु चरडिति पाठात् ॥ (वा) पुरोऽग्रतोऽग्रेषु सर्तेः । ३ । २ । १८ । पुरस्सरः । अग्रतस्सरः । अग्रमग्रेणाग्रे वा सरतीत्यग्रेसरः । सूत्रेऽग्रे इति एदन्तत्वमपि निपात्यते । कथं तर्हि यूथं तदग्रसरगर्वित कृष्णसारमिति । बाहुलकादिति हरदत्तः ॥ (सू) पूर्वे कर्तरि । ३ । २ । १९ । कर्तृवाचिनि पूर्वशब्दे उपपदे सर्तेष्टः स्यात् । पूर्वः सरतीति पूर्वसरः । कर्तरि किम् । पूर्वं देशं सरतीति पूर्वसारः ॥ (सू) कृञो हेतुताच्छील्यानुलोम्येषु । ३ । २ । २० । एषु द्योत्येषु (गम्यमानेषु) करोतेष्टः स्यात् । अतः कृकमीति सः । यशस्करी विद्या । श्राद्धकरः । वचनकरः ॥ (सू) दिवाविभानिशाप्रभाभास्करान्तानन्तादिबहुनान्दीकिंलिपिलिबिबलिभक्तिकर्तृचित्रक्षेत्रसंख्याजङ्घाबाह्वहर्यत्तद्धनुररुष्षु । ३ । २ । २१ ॥ एषु

---

एतेन टकः कित्त्वमालोपार्थं, टित्त्वं तु ङीबर्थमिति ध्वनितम् । प्रत्ययाधिकाराट्टकः प्रत्ययत्वेन 'प्रत्ययः' 'परश्च' इति धातोः पर एव स्यादिति 'आद्यन्तौ टकितौ' इत्यस्यात्र आशङ्कैव नास्तीति बोध्यम् ॥ सामसंगाय इति । कर्मण्याणि सति 'आतो युक्' इति युक् ॥ पिबतेरिति । 'लुग्विकरणालुग्विकरणयोः' इति परिभाषालब्धार्थकथनम्, उपपदपरिगणनं तु वाचनिकमेव ॥ क्षीरपेति । क्षीरं पिबतीति 'आतोऽनुपसर्गे कः' ॥ शक्तीति । घटग्रहणेनैव सिद्धे घटीग्रहणं लिङ्गविशिष्टपरिभाषाया अनित्यत्वज्ञापनार्थम् । तेन मद्रराज्ञीत्यत्र टच् न, द्विषतीताप इत्यत्र 'द्विषत्परयोः' इति खच् नेति दिक् ॥ कवचहर इति । कवचोद्यमनं क्रियमाणं संभाव्यमानं वा वयो गमयति तेनासत्यपि कवचग्रहणे कवचहर इति भवत्येव ॥ हस्तिसूचकयोरिति । अन्यत्र तु स्तम्बे रन्ता कर्णे जपिता ॥ शमि धातोः । शमि उपपदे धातुमात्रात्संज्ञायामच्स्यात् ॥ पुनर्धातुग्रहणमिति । असति धातुग्रहणे 'शमि संज्ञायाम्' इत्यस्यावकाशः । शंभवः । शंवदः । 'कृञो हेतुताच्छील्या–' इत्यस्यावकाशः श्राद्धकरः । शङ्कर इत्यत्रोभयप्रसङ्गे परत्वाट्ट एव स्यात्, धातुग्रहणे कृते तु तत्सामर्थ्यादजेव भवति तदाह–शङ्करा नामेत्यादि ॥ अनधिकरणार्थमुपसंख्यानमिति दर्शयति–पार्श्वाभ्यामित्यादिना॥ कुरुचर इति । कुरुषु देशेषु चरत्यटतीत्यर्थः ॥ भिक्षासेना । अनधिकरणार्थ आरम्भः भिक्षां चरतीति । चरतिरत्र चरणपूर्वके अर्जने वर्तते, चरणेन भिक्षामर्जयतीत्यर्थः ॥ सेनाचर इति । सेनां चरति प्रविशतीत्यर्थः ॥ पचादिष्विति । टविधानं तु 'उपपदमतिङ्' इति नित्यसमासार्थम् । सहचरः । सहचरीत्यत्र तु 'सुप्सुपा' इति वैकल्पिकः समासः ॥ कृञो–। हेतुरिह लौकिको न तु 'तत्प्रयोजको हेतुश्च' इति कृत्रिमः, केवले कृञि तदसंभवात् ॥ द्योत्येष्विति । न तु वाच्येषु 'कर्तरि कृत्' इत्यस्य बाधापत्तेरिति भावः ॥ हेत्वादिषु क्रमेणोदाहरति––यशस्करीत्यादि । एषु किम्, कुम्भकारः । इह प्रसिद्धतरत्वाद् ञ्यनुबन्धोऽपि करोतिरेव गृह्यते, न तु 'कृञ् हिंसायाम्' इति । हेतुः कारणम् । आनुलोम्यमाराध्यचित्तानुवर्तनम् ॥ दिवाविभा–। ननु अन्तकरशब्देन नञ्समासे स्वीकृतेपीष्टसिद्धौ सूत्रे त्वन्तशब्दात्पृथगनन्तग्रहणं व्यर्थमिति चेद् । अत्राहुः–स्वरे तु विशेषोऽस्ति । नञ्समासे हि अव्ययपूर्वपदप्रकृतिस्वरेणाद्युदात्तः स्यात्, अनन्तशब्दस्योपपदत्वे तु 'गतिकारकोपपदात् कृत्' इति

कृञष्टः स्यात् अहेत्वादावपि । दिवाकरः । विभाकरः । निशाकरः । कस्कादित्वात्सः । भास्करः । बहुकरः । बहुशब्दस्य वैपुल्यार्थे संख्यापेक्षया पृथग्ग्रहणम् । लिपिलिबिशब्दौ पर्यायौ । संख्या । एककरः । द्विकरः । कस्कादित्वादहस्करः । नित्यं समासेऽनुत्तरपदस्थस्येति षत्वम् । धनुष्करः । अरुष्करः ॥ (वा) किंयत्तद्बहुषु कृञोऽज्विधानमिति वार्तिकम् ॥ किंकरा । यत्करा । तत्करा । हेत्वादौ टं बाधित्वा परत्वादच् । पुंयोगे ङीप् । किङ्करी ॥ (सू) **कर्मणि भृतौ** । ३ । २ । २२ । कर्मशब्दे उपपदे करोतेष्टः स्यात् । कर्मकरो भृतकः । कर्मकारोऽन्यः ॥ (सू) **न शब्दश्लोककलहगाथावैरचाटुसूत्रमन्त्रपदेषु** । ३ । २ । २३ । एषु कृञष्टो न । हेत्वादिषु प्राप्तः प्रतिषिध्यते । शब्दकार इत्यादि ॥ (सू) **स्तम्बशकृतोरिन्** । ३ । २ । २४ ॥ (वा) **व्रीहिवत्सयोरिति वक्तव्यम्** ॥ स्तम्बकरिर्व्रीहिः । शकृत्करिर्वत्सः । व्रीहिवत्सयोः किम् । स्तम्बकारः । शकृत्कारः ॥ (सू) **हरतेर्दृतिनाथयोः पशौ** । ३ । २ । २५ । दृतिनाथयोरुपपदयोर्हरतेः इन् स्यात् पशौ कर्तरि । दृतिं हरतीति दृतिहरिः । नाथं नासारज्जुं हरतीति नाथहरिः । पशौ किम् । दृतिहारः । नाथहारः ॥ (सू) **फलेग्रहिरात्मम्भरिश्च** । ३ । २ । २६ । फलानि गृह्णाति फलेग्रहिः । उपपदस्य एदन्तत्वं ग्रहेरिन्प्रत्ययश्च निपात्यते । आत्मानं बिभर्तीति आत्मम्भरिः । आत्मनो मुमागमः । भृञ इन् । चात्कुक्षिम्भरिः । चान्द्रास्तु आत्मोदरकुक्षिष्विति पेठुः । ज्योत्स्नाकरम्भमुदरम्भरयश्चकोरा इति मुरारिः ॥ (सू) **एजेः खश्** । ३ । २ । २८ । ण्यन्तादेजेः खश् स्यात् ॥ (सू) **अरुर्द्विषदजन्तस्य मुम्** । ६ । ३ । ६७ । अरुषो द्विषतोऽजन्तस्य च मुमागमः स्यात् खिदन्ते उत्तरपदे न त्वव्ययस्य । शित्त्वाच्छबादिः । जनम् एजयतीति जनमेजयः ॥ (वा) **वातशुनीतिलशर्धेष्वजधेट्तुदजहातिभ्यः खश उपसंख्यानम्** ॥ वातमजा मृगाः ॥ (सू) **खित्यनव्ययस्य** । ६ । ३ । ६६ । खिदन्ते परे पूर्वपदस्य ह्रस्वः स्यात् । ततो मुम् । शुनिन्धयः । तिलन्तुदः । शर्द्धंजहा माषाः । शर्द्धोऽपानशब्दः तं जहति इति विग्रहः । जहातिरन्तर्भावितण्यर्थः ॥ (सू) **नासिकास्तनयोर्ध्मा-**

---

कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तत्वमिति ॥ **दिवाकर इति** । दिवा दिवसं करोतीति विग्रहः । 'दिवाभूता रात्रिः' इत्यादाविव दिवाशब्दस्य वृत्तिविषये शक्तिमत्परत्वात् ॥ मूलेऽनुक्तान्यपि कानिचिदुदाहरणानि ऊह्यानि ॥ कर एव कारः प्रज्ञादित्वादण् । कारं करोतीति कारकरः, आदिकरः, नान्दीकरः, किंकरः, बलिकरः, भक्तिकरः, कर्तृकरः, चित्रकरः, क्षेत्रकरः, जङ्घाकरः, बाहुकर इति ॥ **वार्तिकमिति** । कैयटहरदत्तादिरीत्योक्तम् । माधवस्तु इष्टिरियमित्याह ॥ **पुंयोगे ङीषिति** । यत्तु न्यासकृतोक्तं हेत्वादिषु पूर्वसूत्रेण ट एव भवति, तेन किंकरणशीला किंकरीत्युपपन्नं भवतीति । तन्नादर्तव्यम्, परत्वादचा टचो बाधितत्वात्पूर्वविप्रतिषेधस्य निर्मूलत्वाच्चेति भावः । वृत्तौ तु पक्षान्तरमप्युक्तम् । अथ वा पचादिषु पाठः करिष्यत इति । 'दिवाविभा–' इत्यस्मिन् सूत्रे किमादिग्रहणमपनीय पचादिष्वेव 'किंयत्तद्बहुषु कृञः' इति पठितव्यम् । वार्तिकमपीत्थमेव नेयमिति तस्याशयः । अस्मिन्पक्षे कर्मण्यणं बाधित्वा चरितार्थमिदं वचनं हेत्वादिविवक्षायां परत्वाट्टेन बाध्यते । तेन पुंयोगं विनापि किंकरी स्यादेव, पुंयोगविवक्षायां तु निर्विवादो ङीष् ॥ 'किंयत्तद्बहुष्वज्वा' इति प्रक्रियायां विकल्पोक्तिस्वाकरविरुद्धत्वात्कर्मण्यणोऽपि पक्षे प्रसङ्गाच्चायुक्तैव । न चाजभावे 'दिवाविभा–' इति टः स्यादिति वाच्यम् । सूत्रे किमादिग्रहणापनयनस्य हरदत्तादिभिरुक्तत्वात् । अथवा सूत्रे किमाद्यपनयनं मास्त्विति प्रौढिवादेन प्रक्रियाग्रन्थः प्रवृत्त इति स्वीक्रियते । तथा च हेत्वाद्यविवक्षायां 'किंयत्तत्–' इति वार्तिकेनाच्, तद्विवक्षायां तु परत्वाट्ट इति विषयविशेषे व्याख्याभेदात् फलितं विकल्पमाश्रित्य प्रक्रियायामज्वेति प्राचोक्तमिति स्थितस्य गतिः समर्थनीया ॥ **कर्मणि भृतौ** । भृतिर्वेतनम् । कर्मानुवृत्तौ पुनः कर्मग्रहणात्स्वरूपपरतेत्याह–**कर्मशब्द इति** ॥ **स्तम्बकरिरित्यादि** । इनो नित्त्वात् कृदुत्तरपदप्रकृतिस्वरेणोत्तरपदमाद्युदात्तम् ॥ **कुक्षिम्भरिरिति** । एवं च 'गिरिस्तु कनकाचलः कति न सन्ति वाडवाग्रजाः किटिस्तु धरणीधरः कति न सन्ति भूदारकाः । मरुत्तु मलयानिलः कति न सन्ति झञ्झानिलाः प्रभुस्तु विबुधाश्रयः कति न सन्ति कुक्षिम्भराः ।' इति केषांचित्प्रयोगः प्रामादिक एव ॥ **एजेः खश्** । 'एजृ कम्पने' एजेरिति ण्यन्तस्य निर्देशो, न तु शुद्धस्यैका निर्देशः । खशः किन्करणाल्लिङ्गात् । तद्धि सार्वधातुकत्वे सति शब्यथा स्यादिति । न च शुद्धस्य शपि सत्यसति वा विशेषोऽस्ति । न चोत्तरार्थं शित्त्वमिति वाच्यम्, इहार्थत्वे संभवति केवलोत्तरार्थत्वस्यान्याय्यत्वात्तदेतदाह–**ण्यन्तादेजेरिति** ॥ **अरुर्द्विषत्–**। वर्णग्रहणे तदन्तविधेः सिद्धावप्यन्तग्रहणं शुनिंधय इत्यादौ ह्रस्वे कृते मुम्प्रवृत्त्यर्थम् । तथा–हि । अन्तशब्दः समीपपरः अच्चासावन्तश्चेति विग्रहः । निपातनाद्विशेषणस्य परनिपातः । समीपः 'खित्यनव्ययस्य' इति सूत्रेण विहितो योऽच् तदन्तस्य मुमिति व्याख्यायते । एवं च जनमेजय इत्यादौ स्वतो ह्रस्वेऽपि मुम्सिद्ध्ये प्रथमं 'खिति–' इति ह्रस्वः प्रवर्तनीय इत्यवधेयम् ॥ **शर्द्धंजहा इति** । शर्द्धनं शर्द्धः । 'शृधु कुत्सायाम्' घञ् ॥ तं जहति इति । ननु माषाः शर्द्धमपानशब्दं त्याजयन्ति न तु स्वतो जहतीत्याशङ्कायामाह–**अन्तर्भावितण्यर्थ इति** ॥ यथा-

धेटोः । ३ । २ । २९ ॥ अत्र वार्तिकम्-स्तने धेटो नासिकायां ध्मश्चेति वाच्यम् ॥ स्तनं धयतीति स्तनन्धयः । धेटष्टित्वात् स्तनन्धयी । नासिकन्धमः । नासिकन्धयः ॥ (सू) **नाडीमुष्ट्योश्च** । ३ । १ । ३० ॥ एतयोरुपपदयोः कर्मणोर्ध्माधेटोः खश् स्यात् ॥ यथासंख्यं नेष्यते[1] ॥ नाडिन्धमः । नाडिन्धयः । मुष्टिन्धमः । मुष्टिन्धयः ॥ (वा) **घटीखारीखरीषूपसंख्यानम्** ॥ घटिन्धमः । घटिन्धयः । इत्यादि । खारी परिमाणविशेषः । खरी गर्दभी ॥ (सू) **उदि कूले रुजिवहोः** ।३।२।३१। उत्पूर्वाभ्यां रुजिवहिभ्यां कूले कर्मण्युपपदे खश् स्यात् । कूलमुद्रुजतीति कूलमुद्रुजः । कूलमुद्वहः ॥ (सू) **वहाभ्रे लिहः** । ३ । २ । ३२ । वहः स्कन्धस्तं लेढीति वहंलिहो गौः । अदादित्वाच्छपो लुक् । खशो ङित्वान्न गुणः । अभ्रंलिहो वायुः ॥ (सू) **परिमाणे पचः** । ३ । २ । ३३ । प्रस्थम्पचा स्थाली । खारिम्पचः कटाहः ॥ (सू) **मितनखे च** । ३ । २ । ३४ । मितम्पचा ब्राह्मणी । नखम्पचा यवागूः । पचिरत्र तापवाची ॥ (सू) **विध्वरुषोस्तुदः** । ३ । २ । ३५ । विधुन्तुदः । मुमि कृते संयोगान्तस्य लोपः । अरुन्तुदः ॥ (सू) **असूर्यललाटयोर्दृशितपोः** । ३ । २ । ३६ । असूर्यमित्यसमर्थसमासः । दृशिना नञः सम्बन्धात् । सूर्यं न पश्यन्तीत्यसूर्यम्पश्या राजदाराः[2] । ललाटन्तपः सूर्यः ॥ (सू) **उग्रम्पश्येरम्मदपाणिन्धमाश्च** । ३ । २ । ३७ । एते निपात्यन्ते । उग्रमिति क्रियाविशेषणं तस्मिन्नुपपदे दृशेः खश् । उग्रं पश्यतीत्युग्रम्पश्यः । इरा उदकं तेन माद्यति दीप्यतेऽविन्धनत्वादिति इरम्मदो मेघज्योतिः । इह निपातनात् श्यन्न । पाणयो ध्मायन्तेऽस्मिन्निति पाणिन्धमोऽध्वा । अन्धकाराद्यावृत इत्यर्थः । तत्र हि सर्पाद्यपनोदनाय पाणयः शब्द्यन्ते ॥ (सू) **प्रियवशे वदः खच्** । ३ । २ । ३८ । प्रियंवदः । वशंवदः ॥ (वा) **गमेः सुपि वाच्यः** ॥ असंज्ञार्थमिदम् । मितङ्गमो हस्ती ॥ (वा) **विहायसो विह इति वाच्यम्** ॥ (वा) **खच्च डिद्वा वाच्यः** ॥ विहङ्गमः । विहङ्गः । भुजङ्गमः । भुजङ्गः ॥

---

संख्यं वारयितुमाह-अत्रेति ॥ **धेटष्टित्वादिति** । अवयवे अचरितार्थत्वादिति भावः । खश्प्रत्ययान्तादेव धेटो ङीविष्टो नान्यत इति वर्द्धमानक्षीरस्वामिहरदत्तादयः । तेन 'पाघ्राध्माधेट्-' इति शप्रत्यये 'आतोऽनुपसर्गे कः' इति कप्रत्यये च टाबेव । धया कन्या । गां धयतीति गोधा । अत्र च संप्रदाय एव शरणम् ॥ **नासिकंधम इति** । 'पाघ्राध्मा-' इति धमादेशः ॥ **नाडीमुष्ट्योश्च** ॥ **यथासंख्यं नेति** । एतच्चैहैव सूत्रे भाष्ये वृत्तौ च स्थितम् । यत्तु 'यथासंख्यम्-' इति सूत्रे 'नाडीमुष्ट्योः' इत्युदाहृतं भाष्ये । तत्प्राप्तिमात्राभिप्रायेणेत्येके । शब्दकौस्तुभे तु मतभेदेन तद् बोध्यमिति स्थितम् ॥ **घटीखारीखरीष्विति** । जयादित्यस्तु वातशब्दमप्युदाजहार-वातंधमः, वातंधय इति । तत्तु भाष्यादौ न दृश्यत इति मूलेऽत्रोपेक्षितम् ॥ **उदि कूले** । ननु कूलस्येवोच्छब्दस्यापि सप्तम्यन्तत्वादुपपदत्वं स्यात्ततश्च रुजिवहिभ्यां सह यथासंख्यं स्यादिति चेत् । अत्राहुः-'नाडीमुष्ट्योः' इतिवल्लाघवात् 'उत्कूलयोः' इति वक्तव्ये उदीति व्यस्तोच्चारणान्नोपपदम् । एवं चोदीति पञ्चम्याः स्थाने सप्तमी, रुजिवहोरिति तु पञ्चम्याः स्थाने षष्ठीति । एतच्च यथासंख्यसूत्रे कैयटे स्पष्टम् । किञ्च, रुजेः सकर्मकत्वात्कर्मणीत्युपातेष्ठते तेन कूलं विशेष्यते, नोच्छब्दः । असत्ववाचित्वेनासंभवात् तदेतदाह-उत्पूर्वाभ्यामित्यादिना ॥ **विधुन्तुद इति** । 'अरुर्द्विषदजन्तस्य' इत्युकारात्परो मुम् । 'तमस्तु राहुः स्वर्भानुः सैंहिकेयो विधुन्तुदः' इत्यमरः ॥ **अरुन्तुद इति** । 'अरुन्तुदस्तु मर्मस्पृग्' इत्यमरः । 'व्रणोऽस्त्रियामीर्ममरुः' इति च ॥ **असूर्यंपश्या इति** । 'पाघ्राध्मा-' इति पश्यादेशः । गुप्तिपरं चेदम् । एवं नाम राजदाराः गुप्ताः, यदपरिहार्यदर्शनं सूर्यमपि न पश्यंति किं पुनः परपुरुषमिति । तेन सत्यपि सूर्यदर्शने प्रयोगो न विरुध्यते । यदा तु सूर्याभावदर्शनमात्रं सूर्येतरचन्द्रादेर्दर्शनं वा विवक्षितं तदा खश् न भवत्यनभिधानादिति न्यासकारादयः॥ **प्रियवशे वदः खच्** । खकारो मुमर्थः । चकारस्तु 'खचि ह्रस्वः' इति विशेषणार्थ इति वृत्तिः । 'खे ह्रस्वः' इत्युच्यमाने एजेः खशि जनमेजय इत्यत्रापि स्यादिति तदाशयः । 'एकानुबन्धग्रहणे द्व्यनुबन्धकस्य न ग्रहणम्' इति खशि न भविष्यतीत्यादिना वृत्तिग्रन्थस्यायुक्तत्वमाहुः ॥ खशि प्रकृते प्रत्ययान्तरकरणमुत्तरार्थम् । द्विषन्तप इत्यत्र ह्रस्वणिलोपौ यथा स्यातां शप् च मा भूदिति । नन्वेवमुत्तरत्रैव क्रियतामिति चेत् । सत्यम्, इह करणमन्यतोऽपि क्वचित् भवतीति ज्ञापनार्थं, तेन 'गमेः सुपि' इति नापूर्वं वार्तिकं, किं तु ज्ञापकसिद्धमेव ॥ **असंज्ञार्थमिति** । संज्ञायां तु वक्ष्यमाणेन 'गमश्च' इति सूत्रेणैव सिद्धमिति भावः ॥ **विहंगम इति** । विहायसा आकाशेन गच्छतीति विग्रहः । पूर्ववार्तिकेनैक्यमकृत्वा 'खच्च डिद्वा' इति पृथक्करणसामर्थ्यादन्यत्रापि क्वचिद्भवतीत्याशयेनोदाहरति-**भुजंगमः** । **भुजंग इति** । इह 'गमेः सुपि' इति खच् ॥

---

१ यथासंख्यं नेष्यत इति-पूर्वसूत्रे भाष्ये 'स्तने धेटः' 'मुष्टौ ध्मश्च धेटश्च' 'नासिकानाडीमुष्टिघटीखारीषु ध्मश्च धेटश्च' इति कथनादिति भावः ॥ २-दमयन्त्यादिपतिव्रताभिः कृतस्य चन्द्रदर्शनस्यान्यथानुपपत्त्या राजदाराणां चन्द्रादिदर्शनं भवत्येव । ललाटतपसूर्यं तु, ताः सौन्दर्यविघातकमुखमेचकिमोत्पादकत्वेन न पश्यन्ति ॥ सूर्यदर्शनस्य पातिव्रत्यविघातकत्वे तु 'अथैनां सूर्यमुदीक्षयति-इति गृह्यसूत्रोक्तकर्मणोऽकरणेऽङ्गवैगुण्यमेव स्यादिति केचित् ॥

(सू) द्विषत्परयोस्तापेः । ३ । २ । ३९ । खच् स्यात् ॥ (सू) खचि ह्रस्वः । ६ । ४ । ९४ । खच्परे णौ उपधाया ह्रस्वः स्यात् । द्विषन्तं परं वा तापयतीति द्विषन्तपः । परन्तपः । घटघटीग्रहणाल्लिङ्गविशिष्टपरिभाषा अनित्या । तेनेह न । द्विषन्तीं तापयतीति द्विषतीतापः ॥ (सू) वाचि यमो व्रते । ३ । २ । ४० । वाक्शब्दे उपपदे यमेः खच् स्याद्व्रतं गम्ये ॥ (सू) वाचंयमपुरन्दरौ च । ६ । ३ । ६९ । वाक्पुरोरमन्तत्वं निपात्यते । वाचंयमो मौनव्रती । व्रते किम् । अशक्त्यादिना वाचं यच्छतीति वाग्यामः ॥ (सू) पूःसर्वयोर्दारिसहोः । ३ । २ । ४१ । पुरं दारयतीति पुरन्दरः । सर्वंसहः । सहिग्रहणमसंज्ञार्थम् ॥ भगे च दारेरिति काशिका । बाहुलकेन लब्धमिदमित्याहुः । भगं दारयतीति भगन्दरः ॥ (सू) सर्वकूलाभ्रकरीषेषु कषः । ३ । २ । ४२ । सर्वंकषः खलः । कूलंकषा नदी । अभ्रंकषो वायुः । करीषंकषा वात्या ॥ (सू) मेघर्तिभयेषु कृञः । ३ । २ । ४३ । मेघंकरः । ऋतिंकरः । भयंकरः । भयशब्देन तदन्तविधिः । अभयंकरः ॥ (सू) क्षेमप्रियमद्रेऽण् च । ३ । ३ । ४४ । एषु कृञोऽण् स्यात् । चात् खच् । क्षेमंकरः, क्षेमकारः । प्रियङ्करः, प्रियकारः । मद्रङ्करः, मद्रकारः । वेति वाच्येऽण्ग्रहणं हेत्वादिषु टो मा भूदिति । कथं तर्हि 'अल्पारम्भाः क्षेमकराः' इति । कर्मणः शेषत्वविवक्षायां पचाद्यच् ॥ (सू) आशिते भुवः करणभावयोः । ३ । २ । ४५ । आशितशब्दे उपपदे भवतेः खच् । आशितो भवत्यनेनाशितम्भव ओदनः । आशितस्य भवनम् आशितम्भवः ॥ (सू) संज्ञायां भृतॄवृजिधारिसहितपिदमः । ३ । २ । ४६ । विश्वं बिभर्तीति विश्वम्भरः, विश्वम्भरा । रथन्तरं साम । इह रथेन तरतीति व्युत्पत्तिमात्रं, न त्ववयवार्थानुगमः । पतिंवरा कन्या । शत्रुञ्जयो हस्ती । युगन्धरः पर्वतः । शत्रुंसहः । शत्रुंतपः । अरिंदमः । दमिः शमनायां तेन सकर्मक इत्युक्तम् । मतान्तरे तु अन्तर्भावितण्यर्थोऽत्र दमिः ॥ (सू) गमश्च ३ । २ । ४७ । सुतङ्गमः ॥ (सू) अन्तात्यन्ताध्वदूरपारसर्वानन्तेषु डः । ३ । २ । ४८ । संज्ञायामिति निवृत्तम् । एषु गमेर्डः स्यात् । डित्वसामर्थ्यादभस्यापि टेर्लोपः । अन्तं गच्छतीत्यन्तग इत्यादि ॥ (वा) सर्वत्रपन्नयोरुपसंख्यानम् ॥ सर्वत्रगः । पन्नं पतितं गच्छतीति पन्नगः । पन्नमिति पद्यतेः क्तान्तं क्रियाविशेषणम् ॥ (वा) उरसो लोपश्च ॥ उरसा गच्छतीत्युरगः ॥ (वा) सुदुरोरधिकरणे ॥ सुखेन गच्छत्यत्र सुगः । दुर्गः ॥ (वा) अन्यत्रापि दृश्यत इति वक्तव्यम् ॥ ग्रामगः ॥ (वा) डे च विहायसो विहादेशो वक्तव्यः ॥ विहगः ॥ (सू) आशिषि हनः । ३ । २ । ४९ । शत्रुं बध्याच्छत्रुहः । आशिषि किम् । शत्रुघातः ॥ (वा) दारावाहनोऽणन्तस्य च टः संज्ञायाम् ॥ दारुशब्दे उपपदे आङ्पूर्वाद्धन्तेरण् टकारश्चान्तादेशो वक्तव्य इत्यर्थः । दार्वाघाटः ॥ (वा) चारौ वा ॥ चार्वाघाटः ॥ (वा) कर्मणि समि च ॥ कर्मण्युपपदे संपूर्वाद्धन्तेरुक्तं वेत्यर्थः । वर्णान्संहन्तीति वर्णसङ्घाटः । पदसङ्घाटः । वर्णसङ्घातः । पदसङ्घातः ॥ (सू) अपे क्लेशतमसोः । ३ । २ । ५० । अपपूर्वाद्धन्तेर्डः स्यात् । अनाशीरर्थमिदम् । क्लेशापहः पुत्रः । तमोऽपहः सूर्यः ॥

---

**द्विषन्तप इति** । 'अरुर्द्विषत्–' इति मुमि कृते संयोगान्तलोपः ॥ **निपात्यत इति** । न चैवं खच् प्रत्ययोऽप्यत्रैव निपात्यतामिति वाच्यम्, व्रतादन्यत्रापि प्रसङ्गात् । यदि तु निपातनबलादेव व्रतविषयता आश्रीयते तत्रैव वा व्रतग्रहणं क्रियते 'वाचंयमो व्रते' 'पुरन्दरश्च' इति, तदा इह 'वाचि यमो व्रते' इति सूत्रं 'पूःसर्वयोः' इत्यत्र पुरिदारेत्यंशश्च शक्यमकर्तुम् ॥ **पूःसर्वयोः–** । 'दॄ विदारणे' अयमेव गृह्यते, न तु 'दॄ भये' 'दृङ् आदरे' इत्येताविति संप्रदायः ॥ **असंज्ञार्थमिति** । संज्ञायां तु 'संज्ञायां भृतॄवृजि–' इति वक्ष्यमाणेन सिध्यतीति भावः ॥ **आशितंभव इति** । यावता ओदनेन अतिथ्यादिर्भोजितो भवति स एवमुच्यते । इह वासरूपविधिना ल्युडपि । आशितभवनम्, घञ् तु बाध्यत एव सरूपत्वादित्याहुः । न चात्र 'क्त्ल्युट्तुमुन्खलर्थेषु वासरूपविधिर्न' इति ल्युटोऽनिषेधः शङ्क्यः, यत्र हि घञादेर्बाधकत्वेन क्त्ल्युडादयः प्रसक्तास्तत्र नित्यं बाधो न तु विकल्पेनेति तस्यार्थः । इह तु ल्युटोऽप्यपवादः खच् । अत्र वासरूपन्यायो निर्बाध एव । एतच्च आशितभवनमित्युदाहरतो जयादित्यस्यापि संमतमेवेति दिक् ॥ **संज्ञायां भृतॄ–** ॥ 'विश्वंभरः कैटभजित्' । 'रसा विश्वंभरा स्थिरा' इत्यमरः ॥ **व्युत्पत्तिमात्रमिति** । तत्फलं तु स्वरावग्रहौ 'रथंतरमाजभारा वसिष्ठः' इत्यत्र हि रथमित्यवगृह्णन्ति, कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तत्वं चाधीयते । अखण्डत्वे त्ववग्रहो न स्यात् ॥ 'नब्विषयस्य' इत्याद्युदात्तश्च स्यात् ॥ **इत्युक्तमिति** । माधवाद्यनुरोधेनेत्यर्थः ॥ चित्तव्यापारोपरमः शमः, इन्द्रियव्यापारोपरमस्तु दम इत्यादिवेदान्तग्रन्थाश्चेहानुकूलाः । **मतान्तरे त्विति** । हरदत्तादिमत इत्यर्थः । संज्ञायां किम्, कुटुम्बं बिभर्तीति कुटुम्बभारः ॥ **गमश्च** । पूर्वसूत्र एव गमिर्नोक्तः उत्तरसूत्रे गमेरेवानुवृत्तिर्यथा स्यात् भृतॄप्रभृतीनां मा भूदिति ॥ **सुदुरोरधिकरणे** । कर्मणि तु 'ईषद्दुःसुषु–' इति खलेव, सुखेन गम्यत इति सुगमः पन्थाः । दुर्गमः ॥ **दाराविति** । शब्दापेक्षया पुंलिङ्गत्वं तदाह–दारुशब्द इति । 'काष्ठं दार्विन्धनं त्वेधः' इत्यमरः । टविधानार्थमिदम् । अण् तु 'कर्मण्यण्' इत्येव सिद्धः । 'अलोन्त्यस्य' इत्येव सिद्धेऽन्तग्रहणं स्पष्टार्थम् । अन्यथा हि टः प्रत्ययः संभाव्येत ॥ दार्वाहन्तीति दार्वाघाटः ।

कुमारशीर्षयोर्णिनिः । ३ । २ । ५१ । कुमारघाती । शिरसः शीर्षभावो निपात्यते । शीर्षघाती ॥ लक्षणे जायापत्योष्टक् । ३ । २ । ५२ । हन्तेष्टक् स्याल्लक्षणवति कर्तरि । जायाघ्नो ना । पतिघ्नी स्त्री ॥ अमनुष्यकर्तृके च । ३ । २ । ५३ । जायाघ्नस्तिलकालकः । पतिघ्नी पाणिरेखा । पित्तघ्नं घृतम् । अमनुष्येति किम् । आखुघातः शूद्रः । अथ कथं 'बलभद्रः प्रलम्बघ्नः शत्रुघ्नः कृतघ्नः' इत्यादि । मूलविभुजादित्वात्सिद्धम् । चोरघातो नगरघातो हस्तीति तु बाहुलकादणि ॥ शक्तौ हस्तिकपाटयोः । ३ । २ । ५४ । हन्तेष्टक् स्यात् शक्तौ द्योत्यायाम् । मनुष्यकर्तृकार्थमिदम् । हस्तिघ्नो ना । कपाटघ्नश्चोरः । कवाटेति पाठान्तरम् ॥ पाणिघताडघौ शिल्पिनि । ३ । २ । ५५ । हन्तेष्टक् टिलोपो घत्वं च निपात्यते पाणिताडयोरुपपदयोः । पाणिघः । ताडघः । शिल्पिनि किम् । पाणिघातः । ताडघातः ॥ राजघ उपसंख्यानम् ॥ राजानं हन्ति राजघः ॥ आढ्यसुभगस्थूलपलितनग्नान्धप्रियेषु च्व्यर्थेष्वच्वौ कृञः करणे ख्युन् । ३ । २ । ५६ । एषु च्व्यर्थेष्वच्व्यन्तेषु कर्मण्युपपदेषु कृञः ख्युन् स्यात् । अनाढ्यमाढ्यं कुर्वन्त्यनेन आढ्यङ्करणम् । अच्वौ किम् । आढ्यीकुर्वन्त्यनेन । इह प्रतिषेधसामर्थ्यात् ल्युडपि नेति काशिका । भाष्यमते तु ल्युट् स्यादेव । अच्वावित्युत्तरार्थम् ॥ कर्तरि भुवः खिष्णुच्खुकञौ । ३ । २ । ५७ । आढ्यादिषु च्व्यर्थेष्वच्व्यन्तेषु भवतेरेतौ स्तः । अनाढ्य आढ्यो भवतीति आढ्यम्भविष्णुः । आढ्यम्भावुकः ॥ स्पृशोऽनुदके क्विन् । ३ । २ । ५८ । घृतस्पृक् । कर्मणीति

---

'गोधाकालकादार्वाघाटस्ते वनस्पतीनाम्' ॥ कुमारशीर्षयोर्णिनिः ॥ एतयोः कर्मणोरुपपदयोर्हन्तेर्णिनिः स्यात् । 'सुप्यजातौ' इत्यादिभिः सिद्धे ताच्छील्यावश्यकाधमर्ण्यविरहेऽपि णिन्यर्थं, शिरसः शीर्षभावार्थं वचनम् । लक्षणवतीति । सूत्रे लक्षणशब्दोऽर्शआद्यजन्त इति भावः ॥ जायाघ्न इति ॥ जायामरणसूचकं पाणिरेखाविशेषादिकं यस्यास्ति स तां हन्तीति गौणो व्यवहारः । एवं पतिघ्नीत्यत्रापि बोध्यम् ॥ अमनुष्यकर्तृके च ॥ मनुष्यभिन्नकर्तृकेऽर्थे वर्तमानाद्धन्तेः कर्मण्युपपदे टक् स्यात् ॥ यद्यप्यमनुष्यशब्दो रूढ्या रक्षःपिशाचादीनाहेति प्रागुक्तम्, तथापीह लक्ष्यानुरोधेन व्याख्यातव्यमित्याशयेनाह—तिलकालक इति ॥ 'नानुबन्धकृतमसारूप्यम्' इति टगणोः सारूप्याद्वासरूपविध्यप्रवृत्तेराह—बाहुलकादिति ॥ शक्तौ हस्ति—शक्तौ किम्, विषेण हस्तिनं हन्तीति हस्तिघातः । यद्यपीह शक्तिरस्ति, अशक्तस्य कर्तृत्वानुपपत्तेस्तथापि शक्तिग्रहणसामर्थ्यात्प्रकर्षो विज्ञायते । तेन स्वबलेनैव हन्तुं या शक्तिः सा गृह्यते ॥ कपाटघ्न इति ॥ कं शिरः पाटयति प्रविशत इति कपाटम् । पाठान्तरे तु अटतेः पचाद्यच् 'कवं चोष्णे' इत्यत्र योगविभागात्कोः कवादेश इति हरदत्तः ॥ आढ्यसुभग—। च्व्यर्थेष्विति । अभूततद्भावविषयेष्वित्यर्थः ॥ आढ्यंकरणमिति । लिङ्गविशिष्टपरिभाषया आढ्यशब्देऽप्युपपदे यदा ख्युन्, तदापि 'खित्यनव्ययस्य' इति ह्रस्वेन एतदेव रूपम् ॥ आढ्यीकुर्वन्त्यनेनेति ॥ नन्विह ख्युनोऽभावेऽपि 'करणाधिकरणयोश्च' इति ल्युटा भवितव्यमित्यत आह—प्रतिषेधसामर्थ्यादिति ॥ तथाहि आढ्यीकरणमिति रूपं ल्युट्ख्युनोस्तुल्यम् । न च ख्युनि मुम्ह्रस्वौ स्यातामिति वाच्यम्, अनव्ययस्येति पर्युदासात् । 'ऊर्यादिच्विडाचश्च' इति निपातसंज्ञकत्वेन च्व्यन्तस्य अव्ययत्वात् । न च ख्युनि सति 'उपपदमतिङ्' इति नित्यसमासो लभ्यते ल्युटि तु नेति वाच्यम्, ल्युट्यपि गतिसमासस्य सम्भवात् । तस्यापि नित्यसमासत्वात् । न च स्त्रीप्रत्यये विशेषः, ल्युटि 'टिड्ढा—' इति सूत्रेण ख्युनि तत्रत्येन ख्युन उपसंख्यानेन च ङीपस्तुल्यत्वात् । नापि स्वरे विशेषः, ल्युटि लित्स्वरेण कृञ उदात्तत्वाविशेषात् । न चोत्तरार्थमच्वावित्युक्तमिति वाच्यम्, केवलोत्तरार्थत्वे हि तत्रैव ब्रूयात् । तदेतदुक्तम्—इह ल्युडपि नेति ॥ भाष्यमते त्विति । भाष्यवार्तिकस्वरसेन ल्युडिष्ट इति केवलोत्तरार्थत्वं लभ्यते । अतस्तद्विरोधात् वृत्तिकृन्मतमयुक्तमिति कैयटः ॥ कर्तरि भुवः । अच्व्यन्तेष्विति । अच्वावित्यनुवर्तते, अन्यथा आढ्यीभविष्णुः, आढ्यीभावुक इति स्यादिति भावः । कर्तृग्रहणं करणानुवृत्तिभ्रमनिरासार्थमुत्तरार्थं चेति प्राञ्चः । वस्तुतस्तु व्यर्थमेव, अस्वरितत्वादेवानुवृत्तिसिद्धेः । उत्तरत्राप्युपयोगो नेति स्पष्टीकरिष्यमाणत्वाच्च । खकारो मुमर्थः । चकारः 'चितः' इत्यन्तोदात्तार्थः । नकारो वृद्ध्यर्थः । स्यादेतत्, खिष्णुच इकारो मास्तु, खस्नुरित्येवोच्यताम् । एवं चकारोऽपि न कर्तव्यः प्रत्ययस्वरेणैवाभिमतसिद्धेः । इकारादित्वसिद्धये इडागमे कृतेऽपि 'आगमा अनुदात्ताः' इति तस्यानुदात्तत्वात् । न च 'कृत्योकेष्णुच्चार्वादयश्च' इति स्वरसूत्रे अस्य ग्रहणं न स्यात् । चकारानुबन्धाभावादिकारस्य लाक्षणिकत्वात्षत्वणत्वयोरसिद्धत्वेनेष्णु इति रूपाभावाच्चेति वाच्यम्, कृतेऽपि इकारे 'तदनुबन्धकग्रहणे नातदनुबन्धकस्य' इति परिभाषया अलंकृञादीष्णुच एव ग्रहणं स्यान्न त्वेतस्य, इकारोच्चारणसामर्थ्यादस्यापि ग्रहणमिति चेद्धन्तैवं खष्णुजयमस्तु

---

१ प्रतिषेधसामर्थ्यादिति—च्व्यन्ते उपपदे ख्युनो निषेधेऽपि यदि ल्युट् स्यात् तदा प्रतिषेधोऽनर्थकः स्यात् रूपे विशेषाभावादिति भावः॥ भाष्यमते त्विति—'कर्तरि भुवः खिष्णुच्खुकञौ' इत्युत्तरसूत्रार्थमेव अच्वावित्यस्य चारितार्थ्यप्रदर्शनात्, तेनाढ्यो भवतीति तो नेति पूर्वसूत्रविषये ल्युड् भवत्येवेति भावः ॥

निवृत्तम्। मन्त्रेण स्पृशतीति मन्त्रस्पृक्॥ (सू) ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां च। ३। २। ५९। व्याख्यातम्॥ (सू) त्यदादिषु दृशोऽनालोचने कञ्च। ३। २। ६०। (वा) समानान्ययोश्चेति वाच्यम्॥ सदृक्। सदृशः। अन्यादृक्। अन्यादृशः॥ (वा) क्सोऽपि वाच्यः॥ तादृक्षः। सदृक्षः। अन्यादृक्षः॥ (सू) सत्सूद्विषद्रुहदुहयुजविदभिदच्छिदजिनीराजामुपसर्गेऽपि क्विप्। ३। २। ६१। एभ्यः क्विप्स्यादुपसर्गे सत्यसति च सुप्युपपदे। द्युसत्। उपनिषत्। अण्डसूः। प्रसूः। मित्रद्विट्। प्रद्विट्। मित्रध्रुक्। प्रध्रुक्। गोधुक्। प्रधुक्। अश्वयुक्। प्रयुक्। वेदवित्। निविदित्यादि॥ (वा) अग्रग्रामाभ्यां नयतेर्णो वाच्यः॥ अग्रणीः। ग्रामणीः॥ (सू) भजो ण्विः। ३। २। ६२। सुप्युपसर्गे चोपपदे भजेर्ण्विः स्यात्। अंशभाक्। प्रभाक्॥ (सू) अदोऽनन्ने। ३। २। ६८। विट् स्यात्। आममत्ति आमात्। सस्यात्। अनन्ने किम्। अन्नादः॥ (सू) क्रव्ये च। ३। २। ६९॥ अदेर्विट्। पूर्वेण सिद्धे वचनमण्बाधनार्थम्। क्रव्यात्। आमंमांसभक्षकः। कथं तर्हि क्रव्यादोऽस्रप आशर इति। पक्वमांसशब्दे उपपदेऽण्। उपपदस्य क्रव्यादेशः पृषोदरादित्वात्। (सू) दुहः कप् घश्च। ३। २। ७०। कामदुघा॥ (सू) अन्येभ्योऽपि दृश्यन्ते। ३। २। ७५। छन्दसीति निवृत्तम्। मनिन् क्वनिप् वनिप् विच् एते प्रत्यया धातोः स्युः॥ (सू) नेड्वशि कृति। ७। २। ८। वशादेः कृत इण् न स्यात्। शॄ। सुशर्मा। प्रातरित्वा॥ (सू) विड्वनोरनुनासिकस्यात्। ६। ४। ४१। अनुनासिकस्य आत्स्यात्। विजायत इति विजावा। ओणृ। अवावा। विच्। रोट्। रेट्। सुगण्॥ (सू) क्विप् च। ३। २। ७६। अयमपि दृश्यते। सत्सूद्विषेति त्वस्यैव प्रपञ्चः। उखास्रत्। पर्णध्वत्। वाहभ्रट्॥ (सू) अन्तः। ८। ४। २०। पदान्तस्यानितेर्नस्य

---

तत्रेटि कृते चकारानुबन्धसामर्थ्यादस्यापि ग्रहणमस्त्विति किमिकारेणेति चिन्त्यमेतत्। न चेह लाघवाभावादिकारोऽस्तु चकार एव मास्त्विति शङ्क्यम्, 'एकमात्रो ह्रस्वः, व्यञ्जनं त्वर्द्धमात्रकम्' इति सर्वसम्मतत्वात्। यत्तु हरदत्तेनोक्तं षत्वणत्वयोः सामर्थ्यादस्य ग्रहणमिति। तदापाततः, स्नुजपेक्षया ष्णुजुक्तौ प्रक्रियालाघवेन षत्वणत्वयोः करणस्योचिततया सामर्थ्यायोगादिति दिक्॥ **निवृत्तमिति**। ननु स्पृशेः सकर्मकत्वात्कर्मण्युपपदे इति चेद्। अत्र प्राचः—पूर्वसूत्रात्कर्त्तरि इत्यनुवर्त्तते, सा चानुवृत्तिः 'कर्त्तरि कृत्' इत्यनेनैव कर्त्तरि क्विनः सिद्धत्वाद्व्यर्था सती कर्तृप्रचयार्था। कर्मण्युपपदे एकः कर्त्ता, करणादौ चापर इत्येवं कर्तृप्रचयस्तथा च सुबन्ते उपपदे इति फलितं भवतीति मन्त्रस्पृगित्याद्यपि सिद्धमिति। वस्तुतस्तु कर्तृग्रहणं व्यर्थमिति पूर्वसूत्र एवोक्तम्। न चेह कर्तृप्रचयार्थे तदावश्यकमिति शङ्क्यम्, मन्त्रस्पृगित्यादेः क्विपि सिद्धेः। न च क्विपि कुत्वं न स्यादिति वाच्यम्, क्विन्प्रत्ययो यस्मादिति बहुव्रीहिबलादेव कुत्वसंभवादिति दिक्॥ **सदृगिति**। तमिवेमं पश्यन्ति जनाः। स इवायं पश्यति ज्ञानविषयो भवतीति व्युत्पत्त्या कर्मकर्तरि प्रत्ययः रूढ्यर्थानुगुणत्वात्॥ **सत्सूद्विष**—षद्लृ विशरणादौ। सू इति द्विषा साहचर्यात्सूतेरादादिकस्य ग्रहणं, न तु सुवतिसूयत्योः। 'युजिर् योगे', 'युज समाधौ' द्वयोरपि ग्रहणम्। 'विद ज्ञाने', 'विद विचारणे', 'विद सत्तायां' त्रयाणामपि ग्रहणं, 'विद्लृ लाभे' इत्यस्य तु न ग्रहणम्, विदेत्यकारस्य विवक्षितत्वात्॥ **द्युसदिति**। 'पूर्वपदात्—'[1] इति षत्वं तु न भवति, छन्दसीत्यनुवृत्तेः। तथा च माघः—'मनस्सु येन द्युसदां न्यधीयत' इति। 'आदितेया दिविषदः' इत्यत्र तु सुषामादित्वात्षत्वमिति माधवादयः। उपनिषदित्यत्र तु 'सदिरप्रतेः' इति षः॥ **अग्रग्रामाभ्यामिति**। 'स एषां ग्रामणीः' इति निर्देशेन ज्ञापितमेतत्। नीरूपप्रत्ययविषयत्वे चेदम्। तेन कर्मण्यणि णत्वं न भवति। ग्रामनायः। ज्ञापकस्य सामान्यविषयत्वादग्रशब्दोपपदादपि णत्वम्। तेनाग्रणीरित्यपि सिद्धमित्याहुः॥ **अदोऽनन्ने। विट् स्यादिति।** 'जनसनक्रमगमो विट्' इति पूर्वसूत्रानुवृत्तेः। पूर्वसूत्रं त्विह नोपन्यस्तम्। तत्र हि 'छन्दसि सहः' इत्यतः छन्दसीत्यनुवर्तनात्॥ **कामदुघेति**। धेनुरिति शेषः। कामं दोग्धीति विग्रहः॥ **अन्येभ्योऽपि दृश्यन्ते**। इह 'विजुपे छन्दसि' इत्यतो विच्प्रत्ययः। 'आतो मनिन्—' इति सूत्रान्मनिन्नादयश्चानुवर्त्तन्ते, तदाह—**मनिन्क्वनिबित्यादि**॥ **सुशर्मेति**। सुष्ठु शृणातीति विग्रहः॥ प्रातरेतीति प्रातरित्वा। इणः क्वनिपि 'ह्रस्वस्य पिति' इति तुक्॥ **अवावेति**। अनुनासिकस्य आत्वे अवादेशः, सौ दीर्घनलोपौ॥ **रोट्। रेडिति**। 'रुष रिष हिंसायाम्' उपधागुणः। जश्चर्त्वे॥ **वाहभ्रडिति**। वाहादश्वाद् भ्रश्यतीति विग्रहः। वृत्तौ तु वहाभ्रडिति पाठः। वहः स्कन्धः 'अन्येषामपि दृश्यते' इति पूर्वपदान्तस्य दीर्घ इति हरदत्तः॥ **अन्तः**। 'अनितेः' इति वर्त्तते, अन्तोत्तरपदापेक्षो गृह्यते, नानितेरपेक्षाया अव्यभिचारादत आह—**पदान्तस्येति**॥ **हे प्राणिति**। 'अन प्राणने' क्विप् 'अनुनासिकस्य' इति दीर्घः। 'न ङिसंबुद्ध्योः' इति नलोपनिषेधः। अन्यत्र तु नलोपेन भाव्यमिति संबुद्ध्यन्तमुदाहृतम्॥ **मित्रशीरिति**। ङसेऽपि क्विप्प्रत्यये प्रत्ययलक्षणन्यायेन हलादिकित्प्रत्ययपरत्वमस्ति, '"वर्णाश्रये नास्ति प्रत्ययलक्षणम्' इत्येतद्वर्णप्राधान्य एवेत्यु-



---

१—अरुचिबीजं तु 'पूर्वपदात्संज्ञायाम्—' इत्यनेनैव सिद्धौ अपूर्ववचनकल्पनं तस्यापि विशेषविषयत्वकल्पनं गुरुभूतम्—इति॥

णत्वं स्यादुपसर्गस्थान्निमित्तात्परश्चेत् । हे प्राण् । शास इदितीत्त्वम् । मित्राणि शास्ति मित्रशीः ॥ (वा) आशासः क्वावुपधाया इत्त्वं वाच्यम् ॥ आशीः । इत्त्वोत्त्वे । गीः । पूः ॥ (सू) इस्मन्त्रन्क्विषु च । ६ । ४ । ९७ । एषु छादेर्ह्रस्वः स्यात् । तनुच्छत् । अनुनासिकस्य क्वीति दीर्घः । मो नो धातोः । प्रतान् । प्रशान् । च्छ्वोरित्यूठ् । अक्षद्यूः । ज्वरत्वरेत्यूठ् । जूः । जूरौ । जूरः । तूः । स्रूः । ऊठ् । वृद्धिः । जनानवतीति जनौः । जनावौ । जनावः । मूः । मुवौ । मुवः । सुमूः । सुम्वौ । सुम्वः । राल्लोपः मुर्छा । मूः । मुरौ । मुरः । धुर्वी । धूः ॥ (सू) गमः क्वौ । ६ । ४ । ४० । अनुनासिकलोपः स्यात् । अङ्गगत् ॥ (वा) गमादीनामिति वक्तव्यम् ॥ परीतत् । संयत् । सुनत् ॥ (वा) ऊङ् च गमादीनामिति वक्तव्यम् लोपश्च । अग्रेगूः । भ्रसु । अग्रेभ्रूः ॥ (सू) स्थः क च । ३ । २ । ७७ । चात् क्विप् । शंस्थः । शंस्थाः । शमि धातोरित्यचं बाधितुं सूत्रम् ॥ (सू) सुप्यजातौ णिनिस्ताच्छील्ये । ३ । २ । ७८ । अजात्यर्थे सुपि धातोर्णिनिः स्यात्ताच्छील्ये द्योत्ये । उष्णभोजी । शीतभोजी । अजातौ किम् । ब्राह्मणानामन्त्रयिता । ताच्छील्ये किम् । उष्णं भुङ्क्ते कदाचित् । इह वृत्तिकारेणोपसर्गभिन्न एव सुपि णिनिरिति व्याख्याय उत्प्रतिभ्यामाङि सर्तेरुपसंख्यानमिति पठितम् । हरदत्तमाधवादिभिश्च तदेवानुसृतम् । एतच्च भाष्यविरोधादुपेक्ष्यम् ।

---

क्त्वादिति भावः ॥ **आशास इति** । 'शासु अनुशिष्टौ' 'आङः शासु इच्छायाम्' आत्मनेपदे, 'शास इद्–' इत्यादिना सिद्धे क्वावेव उपाधाया इत्त्वमिति नियमार्थमिदम् । तेन आशास्ते इति सिद्धमित्येके ॥ अन्ये तु विध्यर्थमेवेदं, न नियमार्थं प्राप्त्यभावात् । न च 'शास इदङ्हलोः' इति इत्त्वस्य प्राप्तिरस्तीति वाच्यम्, तत्राङ्साहचर्यात्परस्मैपदिन एव शासेर्ग्रहणात् । यद्यपि 'सर्त्तिशास्ति–' इति सूत्रे पृथक् योगकरणादर्त्तेर्लुङि आरत समारतेति पदद्वयेऽप्यङिति सिद्धान्तस्तथाप्युत्तरार्थतया परस्मैपदग्रहणानुवृत्तेरप्याकरे स्पष्टतया परस्मैपदे दृष्टो यः शास्तिस्तस्मात्परस्याङिति निष्कर्षः । तथा चाऽऽशास्ते इत्यत्र इत्त्वप्रसक्तिरेव नास्तीत्याहुः । वस्तुतस्तु 'आशिषि लिङ्लोटौ', 'क्षियाशीःप्रैषेषु' इत्यादिनिर्देशेनैव सिद्धमिति नेदमपूर्वं वार्तिकम् । ततश्च इत्त्वं वाच्यमित्यस्य इत्त्वं व्याख्येयमित्यर्थः । आशिषीत्याद्युक्तनिर्देशादिति दिक् ॥ **सुम्वाविति** । 'ओः सुपि' इति यण् ॥ **स्थः क च** । **शंस्था इति** । क्विपि लुप्ते 'घुमास्था' इति इत्त्वं न स्थानिवद्भावस्यानल्विधाविति निषेधात् । प्रत्ययलक्षणसूत्रं तु प्रत्ययस्यासाधारणरूपं यत्राश्रीयते तत्रैवेति नियमार्थमिति निष्कर्षात् । प्रत्ययलक्षणसूत्रं तु प्रत्ययस्यासाधारणरूपं यत्राश्रीयते तत्रैवेति नियमार्थमिति निष्कर्षात् । यत्तु कैयटेनोक्तम् । 'ईत्त्वमवकारादौ' इति वचनाद्भाष्यकारीयोदाहरणप्रामाण्याद्वा प्रत्ययलक्षणेन ईत्त्वं नेति । तत् अतृणेडित्यादिसिद्धये प्रत्ययप्राधान्ये अल्विध्यर्थं प्रत्ययलक्षणसूत्रमिति पक्षमभिप्रेत्य । तथाप्यवकारादाविति वचनस्वीकारे सुधीवेति न सिध्येदित्यपरितोषेण पक्षान्तरस्वीकार इति बोध्यम् । न तु नियमार्थमिति निष्कर्षपक्षे तु प्रागुक्तमित्रशीरित्यत्र कथमित्त्वं भवेदिति चेत् । अत्राहुः–'शास इत्' इति, ततः 'अङि' नियमार्थमिदम् । अजादौ चेदित्त्वं स्यादङ्येव नान्यत्रेति हल्ग्रहणं मास्त्विति ज्ञेयमिति । न चैवमपि हलादौ पिति सार्वधातुके तृणह इमो विधानादतृणेडित्यादि नियमपक्षे न सिध्यतीत्यल्विधौ विध्यर्थमिति पक्षोऽपि स्वीकार्य इति वाच्यम्, 'उतो वृद्धिः–' इति सूत्राद्धल्ग्रहणमननुवर्त्य तृणहानीत्यत्रानिष्टवारणाय 'नाभ्यस्तस्याचि–' इति सूत्रादचि नेत्यनुवर्त्य व्याख्यानात् ॥ एतच्च रुधादिगण एव व्याख्यातम् ॥ स्यादेतत्, 'सुपि स्थः' 'क्विप् च' इति सूत्राभ्यां कक्विपौ सिद्धौ तत्राह–**शमीत्यादि** । धातुग्रहणसामर्थ्याद्धि धातुमात्राद्भवन्नच् प्रत्ययो हेत्वादिषु कृञष्ट यथा बाधते तथा तिष्ठतेः कक्विपावपि बाधेतेति 'स्थः क च' इत्यारम्भ इति भावः । नन्वेवं 'शमिधातोः–' इत्यस्यानन्तरं 'स्थः क च' इति सूत्र्यतां चकारेणाचि समुच्चिते सवर्णदीर्घेण शंस्था इति भविष्यति । एवं चोत्सर्गापवादयोः समानदेशतया संदर्भशुद्धिरपि लभ्यते इत्त्वाभावार्थं च न यतनीयमिति महल्लाघवमिति चेत् । अत्राहुः–अशंस्था इत्यत्र 'अच्कावशक्तौ' इति सूत्रेणोत्तरपदमन्तोदात्तं स्यात् । 'कृद्ग्रहणे गतिकारकपूर्वस्यापि' इति शंस्थाशब्दस्याजन्तत्वात् । क्विबन्तेन नञ्समासे तु नञ्पूर्वपदप्रकृतिस्वरः सिध्यतीति ॥ **उष्णभोजीति** । उष्णं भोक्तुं शीलमस्य ॥ **आमन्त्रयितेति** । 'मत्रि गुप्तपरिभाषणे' चुरादिराङ्पूर्वः । इदित्त्वान्नुम् । ताच्छील्यस्य विवक्षितत्वात्तृन् । अत एव 'न लोका–' इति निषेधात् ब्राह्मणानित्यत्र कर्मणि षष्ठी न कृता ॥ **उपसर्गभिन्न एवेति** । 'सत्सूद्विष–' इति सूत्रे उपसर्गेऽपीत्युक्तत्वादुपसर्गभिन्नस्यैव सुपो लाभायास्मिन्सूत्रे पुनः सुब्ग्रहणं कृतमिति भावः ॥ **भाष्यविरोधादिति** । उक्तं च भाष्ये—"सुपिति वर्तमाने पुनः सुब्ग्रहणं किमर्थम् । अनुपसर्ग इत्येवं तदभूत्, इदं तु सुब्मात्रे यथा स्यादुदारासारिण्यः प्रत्यासारिण्यः" इति । अस्यायमाशयः—'सत्सूद्विष—' इति सूत्रे 'सुपि स्थः' इत्यतः सुपीत्यनुवर्तते । तच्च उपसर्गेतरपरम्, उपसर्गेऽपीति पृथगुक्तेः । तदिहानुवर्तमानमर्थाधिकारादुपसर्गेतरपरमेव स्यादिति निष्कर्षे तु मा भूदिह सुब्ग्रहणमुपसर्गेऽपीत्यंशस्याप्यनुवृत्त्या निर्वाहात् । सर्वथापि सुब्मात्रे उपपदे णिनिः न त्वनुपसर्ग एवेति

---

१ उपसर्ग भिन्न एवेति–सुपीत्यनुवर्तमाने सुपिग्रहणमुपसर्गनिवृत्त्यर्थमिति केवलस्योपसर्गस्य निवृत्त्यर्थं द्रष्टव्यम् । अन्यथा–अजाताविति किं ब्राह्मणानामन्त्रयितेति न युज्यते । आङिस्योपसर्गत्वादिति तन्मतेऽपि बोध्यम् ॥

प्रसिद्धश्चोपसर्गेऽपि णिनिः । स बभूवोपजीविनाम् । अनुयायिवर्गः । पतत्यधोधाम विसारि । न वञ्चनीयाः प्रभवोऽनुजीविभिरित्यादौ ॥ (वा) साधुकारिण्युपसंख्यानम् ॥ (वा) ब्रह्मणि वदः ॥ अताच्छील्यार्थं वार्तिकद्वयम् । साधुदायी । ब्रह्मवादी ॥ (सू) कर्तर्युपमाने । ३ । २ । ७९ । णिनिः । उपपदार्थः कर्ता प्रत्ययार्थस्य कर्तुरुपमानम् । उष्ट्र इव क्रोशति उष्ट्रक्रोशी । ध्वाङ्क्षरावी । अताच्छील्यार्थं जात्यर्थं च सूत्रम् । कर्तरि किम् । अपूपानिव भक्षयति माषान् । उपमाने किम् । उष्ट्रः क्रोशति ॥ (सू) व्रते । ३ । २ । ८० । णिनिः स्यात् । स्थण्डिलशायी ॥ (सू) बहुलमाभीक्ष्ण्ये । ३ । २ । ८१ । पौनःपुन्ये द्योत्ये सुप्युपपदे णिनिः । क्षीरपायिण उशीनराः ॥ (सू) मनः । ३ । २ । ८२ । सुपि मन्यतेर्णिनिः स्यात् । दर्शनीयमानी ॥ (सू) आत्ममाने खश्च । ३ । २ । ८३ । स्वकर्मके मनने वर्तमानान्मन्यतेः सुपि खश् स्यात् चात् णिनिः । पण्डितमात्मानं मन्यते पण्डितम्मन्यः, पण्डितमानी । खित्यनव्ययस्य । कालिम्मन्या । अनव्ययस्य किम् । दिवामन्या ॥ (सू) इच एकाचोऽम्प्रत्ययवच्च । ६ । ३ । ६८ । इजन्तादेकाचोऽम् स्यात्स च स्वाद्यम्वत् खिदन्ते परे । औतोम्शसोः । गाम्मन्यः । वाम्शसोः । स्त्रियम्मन्यः, स्त्रीम्मन्यः । नृ । नरम्मन्यः । भुवम्मन्यः । श्रियमात्मानं मन्यते श्रिमन्यं कुलम् । भाष्यकारवचनात् श्रीशब्दस्य ह्रस्वो मुमभावश्च ॥

---

सिद्धान्तः । एतच्च शब्दकौस्तुभे स्पष्टम् ॥ **प्रसिद्धश्चेति** ॥ एवं च 'पाणिनीयानुसारिणीम्' इति प्रक्रियाकारप्रयोगोऽपि निर्बाध एव । अमरश्च प्रायुङ्क्त—'लिङ्गशेषविधिर्व्यापी विशेषैर्यद्यबाधितः' इति दिक् ॥ **साधुकारिणीति** । एतच्च ज्ञापकसिद्धम् । 'आ क्वेः' इति सूत्रे हि तच्छीलात्पृथक् साधुकारी गृह्यते तच्च ताच्छील्यं विनापि णिनौ सत्येव संगच्छते । 'ब्रह्मणि वदः' इदं तु वाचनिकमेव । अताच्छील्यार्थमिदम् । एतच्च कैयटहरदत्तादिग्रन्थे स्पष्टम् ॥ यत्तु भट्टवार्तिके ब्रह्मवादिशब्दस्य तच्छीलतद्धर्मतत्साधुकारिपरतया व्याख्यानं कृतम् । 'आ क्वेः—' इत्यधिकारे तु ब्रह्मणि वदेर्णिनिविधायकं वचनं नास्त्येवेति कथमिदं संगच्छति इति चेत् । अत्राहुः—भट्टपादानामयमाशयः 'सुप्यजातौ' इति सूत्रेण ताच्छील्ये णिनिः, उपसंख्यानेन ज्ञापकेन वा साधुकारिणि णिनिः, 'आवश्यकाधमर्ण्ययोर्णिनिः' इत्यावश्यके णिनिस्तु तद्धर्मे पर्यवस्यति, न त्विह 'आ क्वेः—' इति सूत्रस्य व्यापारोऽस्तीति । ननु ब्रह्मवादिनो वदन्ति इत्यत्र ब्रह्म वेद इति ब्रह्मशब्दस्यापि जातिवाचकत्वात्कथमिह ताच्छील्ये णिनिरिति समर्थनमिति चेत् । अत्र नव्याः—'सुप्यजातौ—' इत्यत्र प्राणिजातिरेव पर्युदस्यते, ताच्छील्यसमभिव्याहारात् । ब्राह्मणानामन्त्रयितेति प्रत्युदाहरणानुगुण्याच्चेति न काऽप्यनुपपत्तिरिति ॥ **मनः** । बहुलग्रहणानुवृत्तेरिह 'मन ज्ञाने' इति दैवादिकस्यैव ग्रहणं, न तु 'मनु अवबोधने' इति तानादिकस्य । तेन उत्तरसूत्रे खशि श्यन्नेव भवति, न तृप्रत्ययस्तदाह—**मन्यतेरिति** ॥ **आत्ममाने** । मननं मानः भावे घञ् । आत्मनो मान इति कर्मणि षष्ठ्या समासः । स्वपर्याय आत्मशब्दः प्रत्ययार्थत्वेन सन्निहितः । कर्ता स्वपदार्थस्तदाह—**स्वकर्मक इत्यादि** ॥ **चेदिति** । ननु 'वासरूप—' विधिना लभ्यत एव णिनिरिति किमर्थश्चकार इति चेत् । अत्राहुः—चकारेणाविच्छेदाय णिनिः समुच्चीयते । तेन 'करणे यजः' इत्यादौ णिनिरेवानुवर्तते न तु खश्, एवं चोक्तप्रयोजनानुरोधेन 'चानुकृष्टं नोत्तरत्र' इतीह न प्रवर्तत इति ॥ **पण्डितमात्मानमिति** । एकस्याप्यात्मनः स्वरूपेण कर्तृत्वं पण्डितत्वविशिष्टरूपेण च कर्मत्वं बोध्यम् । आत्ममाने किम्, दर्शनीयमानी देवदत्तो यज्ञदत्तस्य । **कालिमन्येति** । 'स्त्रियाः पुंवद्—' इति प्राप्तं पुंवद्भावं बाधित्वा परत्वाद् ह्रस्वः । यत्त्वत्र 'क्यङ्मानिनोश्च' इति प्राप्तः पुंवद्भाव इति प्रसादकृतोक्तं, तद्भ्रमसोक्तमेव, मानिन्रूपाभावस्य स्पष्टत्वात् ॥ **दिवामन्येति** । अधिकरणशक्तिप्रधानस्याप्यस्य वृत्तिस्वभावात्कर्मत्वम् ॥ **इच एकाचः**—। अम्ग्रहणमिहावर्तते तत एकेन अम् विधीयते, परेण प्रत्ययो विशेष्यते, तदाह—**स्वाद्यम्वदिति** । एवं च 'न विभक्तौ तुस्माः' इति निषेधान्मकारस्य नेत्संज्ञा । अत एव परश्च भवति ॥ 'औतोऽम्शसोः' इत्यत्र शसा साहचर्यात् सुबेवाम् गृह्यते इत्युक्तत्वादोत आकारश्च भवतीत्याशयेनोदाहरति—**गांमन्य इति** ॥ **नरंमन्य इति** ॥ 'ऋतो ङि—' इत्यादिना गुणः ॥ **भाष्यकारेति** ॥ अयं भावः—यथा पृष्ठादयः शब्दाः पुंयोगात्स्त्रियां वर्तन्ते पृष्ठी गणिकेति, तथेह श्रीशब्दः परित्यक्तस्वलिङ्गः क्लीबः सन् कुले वर्तते, तत्र 'ह्रस्वो नपुंसके' इति ह्रस्वः । मुम् तु न, अपवादेन अमा बाधात् । 'स्वमोर्नपुंसकात्' इत्यमो लुक् । न चैवं गांमन्य इत्यादावपि 'सुपो धातुप्रातिपदिकयोः' इति लुक् स्यादिति वाच्यम्, अम्विधिसामर्थ्यादेव तद्बाधादित्याहुः ॥ अम्प्रत्ययस्तु 'मध्येऽपवादाः—' इति न्यायेन 'सुपो धातुप्रातिपदिकयोः—' इति लुकमेव बाधते न तु 'स्वमोर्नपुंसकात्' इति लुकमिति भाष्यादौ स्थितम् ।

---

१ अत्र भाष्ये—'कर्मकर्तृग्रहणं कर्तव्यम्, कर्मोपदिष्टो यक् यथा स्यात् श्यन् मा भूत्' इत्युक्तम्। श्यन् मा भूदित्यनेन दिवादेरेव ग्रहणमिति स्पष्टमेव दृश्यत इत्यभिप्रेत्याह मन्यतेरिति ॥ २ बहुलेति—उत्तरसूत्रे दिवादेरेव ग्रहणेनात्रापि तद्ग्रहणमर्थाधिकारादिति केचित् ॥ ३ कर्मणि षष्ठ्येति—न तु कर्तृषष्ठ्या, आत्मशब्दोपादानसामर्थ्यादिति भावः ॥

भूते। ३।२।८४। अधिकारोऽयम्। वर्तमाने लडिति यावत्॥ करणे यजः। ३।२।८५। करणे उपपदे भूतार्थाद्यजेर्णिनिः स्यात्कर्तरि। सोमेनेष्टवान् सोमयाजी। अग्निष्टोमयाजी॥ कर्मणि हनः। ३।२।८६। पितृव्यघाती। कर्मणीत्येतत्सहे चेति यावदधिक्रियते॥ ब्रह्मभ्रूणवृत्रेषु क्विप्। ३।२।८७। एषु कर्मसूपपदेषु हन्तेर्भूते क्विप्स्यात्। ब्रह्महा। भ्रूणहा। वृत्रहा। क्विप् चेत्येव सिद्धे नियमार्थमिदम्। ब्रह्मादिष्वेव, हन्तेरेव, भूत एव, क्विबेवेति चतुर्विधोऽत्र नियम इति काशिका। ब्रह्मादिष्वेव, क्विबेवेति द्विविधो नियम इति भाष्यम्॥ सुकर्मपापमन्त्रपुण्येषु कृञः। ३।२।८९। सौ कर्मादिषु च कृञः क्विप्स्यात्। त्रिविधोऽत्र नियम इति काशिका। सुकृत्। कर्मकृत्। पापकृत्। मन्त्रकृत्। पुण्यकृत्। क्विबेवेति नियमात्कर्म कृतवानित्यत्राऽण् न। कृञ एवेति नियमान्मन्त्रमधीतवान्मन्त्राध्यायः। अत्र न क्विप्। भूत एवेति नियमात् मन्त्रं करोति करिष्यति वेति विवक्षायां न क्विप्। स्वादिष्वेवेति नियमाभावादन्यस्मिन्नप्युपपदे क्विप्। शास्त्रकृत्। भाष्यकृत्॥ सोमे सुञः। ३।२।९०। सोमसुत्। चतुर्विधोऽत्र नियम इति काशिका। एवमुत्तरसूत्रेऽपि॥ अग्नौ चेः। ३। ।९१। अग्निचित्॥

---

स्यादेतत्, नपुंसकह्रस्वे कृते मुमः प्राप्तिरेव नास्ति कथमत्रापवादेन अमा बाधादित्युक्तिः संगच्छेत, 'अरुर्द्विषत्—' इति सूत्रे हि अन्तग्रहणस्य समीपवाचित्वेन 'खित्यनव्ययस्य इति ह्रस्वे कृते पश्चान्मुमिति व्याख्यातत्वात्। सत्यम्, जनमेजय इत्यत्र स्वतःसिद्धेऽपि ह्रस्वे यथा 'खित्यनव्ययस्य' इति पुनर्ह्रस्वो मुमर्थं स्वीक्रियते, तथाऽत्रापि भवेदित्यस्त्येव मुमः प्राप्तिरिति॥ भूते। धातोरित्यधिकाराद्धात्वर्थस्य विशेषणमिदम्। भूतेऽर्थे विद्यमानाद्धातोरित्यर्थः॥ करणे॥ स्वारितत्वाण्णिनिरेवानुवर्तते न तु खश्। इत्याह—णिनिः स्यादिति॥ सोमेन लताविशेषेण यागं कृतवानित्यर्थः॥ अग्निष्टोमेति। अग्निष्टोमस्तोत्रेण समाप्यमानो यो यागः स लक्षणयाऽग्निष्टोमस्तेनापूर्वं भावितवानित्यर्थः। उक्तं च काशिकायाम्—' अग्निष्टोमः फलभावनायां करणम्' इति॥ कर्मणि हनः। पितृव्यघातीति॥ अत्र काशिका—' कुत्सितग्रहणं कर्तव्यमिह मा भूत्। चोरं हतवानिति'। यद्यपीदं भाष्ये नास्ति, तथापि शब्दशक्तिस्वाभाव्यादिदं लभ्यत इत्याहुः॥ चतुर्विध इति। अयमाशयः—इह सूत्रे श्रुतत्वात्पूर्वं ब्रह्मादय उद्देश्यास्ततोऽनन्तरं प्रकृतित्वाद्धन्तिस्ततः परिशेषाद्भूत इति। क्विप् तु सर्वान्ते निर्देष्टव्यः, विधेयत्वात्। तदेवं वचनव्यक्तिः। ब्रह्मादिषूपपदेषु हन्तेर्भूते क्विबिति। एवं स्थिते यत्रैवकारस्ततोऽन्यत्र नियम इति न्यायेन नियमोऽत्र भवन्ननन्तरे भवति ततश्च ब्रह्मादिष्वेवेत्यवधारणे, हन्तेस्तदनन्तरं निर्दिष्टत्वादुपपदान्तरसंबन्धनिवृत्तिफलो नियमो भवति। ब्रह्मादिषु हन्तेरेव भूते इत्यवधारणे त्वनन्तरत्वाद्विशेषेऽपि प्राथम्यादुपपदनियमो धात्वन्तरनिवृत्तिफलकः, ब्रह्मादिषु हन्तेर्भूते एव क्विबित्यवधारणे तु क्विब्हन्त्योरानन्तर्येऽविशिष्टेऽपि प्राधान्यात्कालान्तरसंबन्धनिवृत्तिफलकः प्रत्ययनियमः। ब्रह्मादिषु हन्तेर्भूते क्विबेवेति वचनव्यक्तौ प्रत्ययान्तरसंबन्धनिवृत्तिफलकः कालनियमः। सोऽयं प्रकृत्युपपदप्रत्ययकालनियमानां विवेकः। अगृह्यमाणविशेषात्तु चतुर्विधस्यापीह ग्रहणम्। तत्र ब्रह्मादिष्वेव हन्तेरिति प्रकृतिनियमे भूत इत्याश्रयणाद्वर्तमानकाले भविष्यत्काले चोपपदान्तरेऽपि भवत्येव। पुरुषं हन्ति, हनिष्यति वा पुरुषहा 'अरिहयोऽरिहयोगविचक्षणः'। अरीन् हन्तीति अरिहा स चासौ योगश्च अरिहयोगस्तत्र विचक्षण इत्यर्थः। प्रकृतिनियमफलं तु पुरुषं हतवान् पुरुषहा इति भूतार्थे प्रयोगाभावः। ब्रह्मादिषु हन्तेरेवेत्युपपदनियमेऽपि भूत इत्याश्रयणाद्वर्तमानभविष्यत्कालयोर्धात्वन्तरादपि भवत्येव। वृत्रं जयति, जेष्यति वा वृत्रजिदिति। उपपदनियमफलं तु वृत्रं जितवान् वृत्रजिदिति प्रयोगाभावः। भूत एव क्विबिति प्रत्ययनियमेऽपि ब्रह्मादिष्विरयुक्तेरुपपदान्तरे वर्तमानभविष्यत्कालयोर्हन्तेः क्विप् भवत्येव। पुरुषं हन्ति हनिष्यति वा पुरुषहा, अरिहेति प्राग्वत्। प्रत्ययनियमफलं तु ब्रह्माणं हन्ति ब्रह्महेत्यादिप्रयोगाभावः। भूते क्विबेवेति कालनियमेऽपि ब्रह्मादिष्वित्युक्तेरुपपदान्तरे भूतेऽपि प्रत्ययान्तरं भवत्येव पितृव्यं हतवान् पितृव्यघाती, इह 'कर्मणि हनः' इति भूते णिनिः। कालनियमफलं तु ब्रह्माणं हतवान् ब्रह्मघातीति प्रयोगाभावः। सोपपदश्च प्रत्ययो नियमेन व्यावर्त्यते। निष्ठा तु भवत्येव वृत्रं हतवानिति। भाष्यकारस्तु प्रकृतिकालनियमावेवाशिश्रियत्। तस्यायमाशयः—धातुकालौ हि नेह सूत्रे श्रुतौ किन्तु प्रकरणलक्षणजघन्यप्रमाणेनोपस्थितौ अतस्तयोरेवापराधो न्याय्यो न तूपपदप्रत्यययोः श्रुत्युपस्थापितत्वात्। एवं न्यायोपष्टब्धेन भाष्येण सह विरोधात् वृत्तिमतमुपेक्ष्यमेवेति कैयटे स्थितम्। यत्त्विह हरदत्तेनोक्तं धातूपपदविषयं नियमद्वयं भाष्ये प्रदर्शितमिति तत्र धातुकालविषयमिति वक्तव्ये उपपदग्रहणं प्रामादिकमित्यवधेयम्॥ सुकर्म त्रिविध इति। धातुनियमस्त्विह नेष्यत इति भावः॥ क्विबेवेतीति। भूते क्विबेवेति प्रत्ययान्तरसंबन्धनिवृत्तिफलककालनियमादित्यर्थः॥ कृञ एवेतीति। सुकर्मादिषु कृञएवेति धात्वन्तरसंबन्धनिवृत्तिफलकोपपदनियमादित्यर्थः॥ भूत एवेतीति। भूत एव क्विबिति कालान्तरसंबन्धनिवृत्तिफलकप्रत्ययनियमादित्यर्थः॥ स्वादिष्वेवेतीति। स्वादिष्वेव कृञ इत्युपपदान्तरसम्बन्धनिवृत्तिफलकधातुनियमाभावादित्यर्थः॥ सोमे सुञः। इहापि चतुर्विधो नियम इति वृत्तिः। एवमुत्तरसूत्रेऽपि। तत्र भूतकालस्य क्विपि नियतत्वात्सोमं सुतवान् सोमसावः। अग्निं चितवान् अग्निचायः इत्यण् भवति। कृञोरेः सोम एव उपपदे नियतत्वाभावात्तरस्वभाववोपपदे नियतत्वात्। सुरां सुतवान् सुरासुत्, इष्टकाश्चितवानिष्टकाचिदिति न भवति किन्तु

( निराकरिष्णुः । प्रजनिष्णुः । उत्पचिष्णुः । उत्पतिष्णुः । उन्मदिष्णुः । रोचिष्णुः । अपत्रपिष्णुः । वर्तिष्णुः । वर्धिष्णुः । सहिष्णुः । चरिष्णुः ) ॥ ३१०७ णेश्छन्दसि ३ । २ । १३७ । वीरुधः पारयिष्णवः ॥ ३१०८ भुवश्च । ३ । २ । १३८ । छन्दसीत्येव । भविष्णुः । कथं तर्हि जगत्प्रभोरप्रभविष्णु वैष्णवमिति । निरंकुशाः कवयः । चकारोऽनुक्तसमुच्चयार्थः । भ्राजिष्णुरिति वृत्तिः । एवं क्षयिष्णुः । नैतद्भाष्ये दृष्टम् ॥ ३१०९ ग्लाजिस्थश्च ग्स्नुः । ३ । २ । १३९ । छन्दसीति निवृत्तम् । गिदयं न तु कित् । तेन स्थ ईत्त्वं न । ग्लास्नुः । गित्त्वान्न गुणः । जिष्णुः । स्थास्नुः । चाद्भुवः । श्र्युकः क्किती त्यत्र गकारप्रश्लेषान्नेट् । भूष्णुः ॥ वा० दंशेश्छन्दस्युपसंख्यानम् ॥ दङ्क्ष्णवः पशवः ॥ ३११० त्रसिगृधिधृषिक्षिपेः क्नुः । ३ । २ । १४० । त्रस्नुः । गृध्नुः । धृष्णुः । क्षिप्नुः ॥ ३१११ शमित्यष्टाभ्यो घिनुण् । ३ । २ । १४१ । उकार उच्चारणार्थ इति काशिका । अनुबन्ध इति भाष्यम् । तेन शमिनितरा शमिनीतरेत्यत्र उगितश्चेति ह्रस्वविकल्पः । न चैवं शमी शमिनावित्यादौ नुम्प्रसङ्गः, झल्ग्रहणमपकृष्य झलन्तानामेव तद्विधानात् । नोदात्तोपदेशस्येति वृद्धिनिषेधः । शमी, तमी, दमी, श्रमी, भ्रमी, क्षमी, क्लमी, प्रमादी, उत्पूर्वान्मदेः अलंकृञादिसूत्रेणेष्णुजुक्तो वासरूपविधिना घिनुणपि । उन्मादी । ताच्छीलिकेषु वासरूपविधिर्नास्ति इति तु प्रायिकम् ॥ ३११२ सम्पृचानुरुधाङ्यमाङ्यसपरिसृसंसृजपरिदेविसंज्वरपरिक्षिपपरिरटपरिवदपरिदहपरिमुहदुषद्विषद्रुहदुहयुजाक्रीडविविचत्यजरजभजातिचरापचरामुषाभ्याहनश्च । ३ । २ । १४२ । घिनुण् स्यात् । सम्पर्की । अनुरोधी । आयामी । आयासी । परिसारी । संसर्गी । परिदेवी । संज्वारी । परिक्षेपी । परिराटी । परिवादी । परिदाही । परिमोही । दोषी । द्वेषी । द्रोही । दोही । योगी । आक्रीडी । विवेकी । त्यागी । रागी । भागी । अतिचारी । अपचारी । आमोषी । अभ्याघाती ॥ ३११३ वौ कषलसकत्थस्रम्भः । ३ । २ । १४३ । विकाषी । विलासी । विकत्थी । विस्रम्भी ॥ ३११४ अपे च लषः । ३ । २ । १४४ । चाद्वौ । अपलाषी । विलाषी ॥ ३११५ प्रे लपसृद्रुमथवदवसः । ३ । २ । १४५ । प्रलापी । प्रसारी । प्रद्रावी । प्रमाथी । प्रवादी । प्रवासी ॥ ३११६ निन्दहिंसक्लिशखादविनाशपरिक्षिपपरिरटपरिवादिव्याभाषासूञो वुञ् । ३ । २ । १४६ ॥ पञ्चम्यर्थे

---

ग्रहणम् ' इति न्यायात् । निराङ्पूर्वोऽपि कृञ् स एव, प्रपूर्वो ' जनी प्रादुर्भावे ' इह ' डुपचष् पाके ', ' पतॢ गतौ ', ' मदी हर्षे ' त्रयोऽपि उत्पूर्वाः पठ्यन्ते, तत्र 'उदः पचपतमदः' इत्येव वक्तव्ये प्रत्येकमुत्पूर्वस्य पाठ उपसर्गान्तरनिवृत्त्यर्थः । तेन समुत्पतिष्णुरित्यादि न भवतीत्याहुः ॥ 'रुच दीप्तौ' अपपूर्वः 'त्रपूष् लज्जायाम्', 'वृतु वर्तने', ' वृध वृद्धौ ', 'षह मर्षणे', ' चर गतौ'॥ इत्यादीति । आदिशब्दग्राह्यास्तु निराकरिष्णुः, प्रजनिष्णुः।उत्पचिष्णुः, उत्पतिष्णुरिति । 'उत्पतिष्णुसहिष्णू च चेरतुः खरदूषणौ ' इति भट्टिः । कालिदासोऽप्याह–'एलानामुत्पतिष्णवः' इति ॥ केचित्तु पत इति स्थाने दान्तं सूत्रे पठित्वा ' पद गतौ ' इत्यस्मात्प्रत्ययमाहुः । उन्मदिष्णुः, रोचिष्णुः, अपत्रपिष्णुः, वर्तिष्णु, वार्द्धिष्णुः, सहिष्णुः, चरिष्णुः ॥ पारयिष्णव इति । 'अयामन्ता–' इति णेरय् ॥ नैतदिति । चकारस्यानुक्तसमुच्चयार्थत्वमित्यर्थः ॥ ईत्त्वं नेति । 'घुमास्था' इत्यादिना ॥ गित्त्वादिति । ' क्ङिति च ' इत्यत्र गकारं प्रश्लिष्य गिति किति ङितीति व्याख्यानादिति भावः ॥ गकारप्रश्लेषादिति । नन्वेवं गकारे चर्त्वस्यासिद्धत्वात् ' हशि च' इत्युत्त्वं स्यादिति चेत् । सत्यम्, सौत्रोऽयं निर्देशः । तथा च वार्तिकम्–' ग्स्नोर्गित्त्वान्न स्थ ईकारः क्ङितोरीत्वशासनात् । गुणाभावस्त्रिषु स्मार्यः श्र्युकोऽनिट्त्वं गकोरितोः , इति ॥ दङ्क्ष्णव इति । 'दंश दशने ' ' व्रश्च–' इत्यादिना षत्वे 'षढोः कः सि' इति कत्वम् । ' आदेशप्रत्यययोः ' इति षत्वम् । ' अनिदिताम् ' इति ' नलोपो न' ग्स्नोर्गित्त्वेन प्राप्त्यभावात् ॥ त्रस्नुरिति । ' नेड्वशि–' इति नेट् ॥ शमित्यष्टाभ्यो—। इतिशब्द आद्यर्थः ॥ शमिनीतरेत्यत्रेति । अत्र नव्याः–विद्वत्तरेतिवत् ' तसिलादिषु–' इति पुंवद्भावेन शमितरेति भाव्यम् । न च उगित्त्वाभ्युपगमस्य फलाभावाद्ध्रस्वविकल्प एव भवतीति वाच्यम्, पाक्षिकह्रस्वेन उीगत्करणस्य चरितार्थत्वाद्ध्रस्वाभावपक्षे तु पुंवद्भावस्य दुर्वारत्वादित्याहुः ॥ संपृचा–। संपर्कीति । ' पृची संपर्के ', ' चजोः–' इति कुत्वं गुणः ॥ परिदेवीति । ' देवृ देवने ' भ्वादिः, ण्यन्तस्य दीव्यतेस्तु नेह ग्रहणं, लाक्षणिकत्वात्, अण्यन्तैः साहचर्याच्च ॥ अभ्याघातीति । अभ्याङ्पूर्वाद्धन्तेर्हस्य कुत्वेन घः ' हनस्तोऽचिण्णलोः ' इति नस्य तः, ' अत उपधायाः ' इति वृद्धिः ॥ वौ कष–। कष हिंसार्थः, ' लस श्लेषणक्रीडनयोः ' ' कत्थ श्लाघायाम् ' ' स्रम्भु विश्वासे ' ॥ अपे च लषः । ' लष कान्तौ ' ॥ प्रे लप–। ' लप व्यक्तायां वाचि ' ॥ प्रमाथीति । ' मथे विलोडने ' ॥ निन्दहिंस–। इह सूत्रे विनाशेति विपूर्वस्य नशेर्ण्यन्तस्य भाविना णिलोपेन निर्देशः । अकारस्त्वागन्तुकः । केचित्तु विनाशीति ण्यन्तमेव पठन्ति । परिवादीति तु वदेर्ण्यन्तस्य पाठो निर्विवाद एव । असूयतिः । कण्ड्वादिर्यगन्तः, निन्दादीनामसूयान्तानां समाहारद्वन्द्वे सौत्रं पुंस्त्वम् । स्यादेतत्, असूयतेरेव वुञ् विधेयो नेत-



१ आहुरिति–'संज्ञापूरण्योश्च' इति निषेधात् पक्षे पुंवद्भावो नेति बोध्यम्–इति शेखरे नागेशभट्टः ॥

प्रथमा । एभ्यो वुञ् स्यात् । निन्दकः । हिंसक इत्यादि । ण्वुला सिद्धे वुञ्वचनं ज्ञापकं तच्छीलादिषु वासरूपन्यायेन तृजादयो नेति ॥ ॐ देविक्रुशोश्चोपसर्गे । ३ । २ । १४७ । आदेवकः। आक्रोशकः । उपसर्गे किम् । देविता । क्रोष्टा ॥ ॐ चलनशब्दार्थादकर्मकाद्युच् । ३ ।२ । १४८ । चलनार्थाच्छब्दार्थाच्च युच् स्यात् । चलनः । चोपनः । कम्पनः । शब्दनः । रवणः । अकर्मकात्किम् । पठिता विद्याम् ॥ ॐ अनुदात्तेतश्च हलादेः ।३।२।१४९। अकर्मकाद्युच् स्यात् । वर्तनः । वर्धनः । अनुदात्तेतः किम् । भविता । हलादेः किम् । एधिता । अकर्मकात्किम् । वसिता वस्त्रम् ॥ ॐ जुचङ्क्रम्यदन्द्रम्यसृगृधिज्वलशुचलषपतपदः । ३ । २ । १५० । जु इति सौत्रो धातुः गतौ वेगे च । जवनः । चङ्क्रमणः । दन्द्रमणः । सरणः । पूर्वेण सिद्धे पदग्रहणं लषपतपदेत्युकञा बाधा मा भूदिति । तेन ताच्छीलिकेषु परस्परं वासरूपविधिर्नास्तीति । तेनालंकृञ्सूत्र ॥ ॐ क्रुधमण्डार्थेभ्यश्च । ३ । २ । १५१ । क्रोधनः । रोषणः । मण्डनः । भूषणः ॥ ॐ न यः । ३ । २ । १५२ । यकारान्ताद्युच् न स्यात् । क्नूयिता । क्ष्मायिता ॥ ॐ सूददीपदीक्षश्च । ३ । २ । १५३ । युच् न स्यात् । सूदिता । दीपिता । दीक्षिता । नमिकम्पीति रेण युचो बाधे सिद्धे दीपेर्ग्रहणं ज्ञापयति ताच्छीलिकेषु वासरूपविधिर्नास्तीति प्रायिकमिति । तेन कम्रा, कमना युवतिः । कम्प्रा, कमना शाखा । यदि सूदेर्युज् न, कथं मधुसूदनः । नन्द्यादिः ॥ ॐ लषपतपदस्थाभूवृषहनकमगमशॄभ्य उकञ् ।३।२।१५४। लाषुकः। पातुकः इत्यादि ॥ ॐ जल्पभिक्षकुट्टलुण्टवृङः षाकन् ।३।२।१५५। जल्पाकः। भिक्षाकः।कुट्टाकः । लुण्टाकः । वराकः । वराकी ॥ ॐ प्रजोरिनिः ।३।२।१५६। प्रजवी । प्रजविनौ । प्रजविनः ॥ ॐ जिदृक्षिविश्रीण्वमाव्यथाभ्यमपरिभूप्रसूभ्यश्च । ३ । २ । १५७ । जयी । दरी । क्षयी । विश्रयी । अत्ययी । वमी । अव्यथी । अभ्यमी । परिभवी । प्रसवी ॥ ॐ स्पृहिगृहिपतिदयिनिद्रातन्द्राश्रद्धाभ्य आ-

---

रेभ्यः, निन्दादीनां ण्वुलैव सिद्धेः।न हि तत्र लित्स्वरनित्स्वरयोर्विशेषोऽस्ति,उभयथाप्याद्युदात्तत्वात्। असूयतेस्तु ण्वुलि'लिति' इति प्रत्ययात्पूर्वमुदात्तं, वुञि तु 'ञ्नित्यादिर्नित्यम्' इत्यादिरुदात्त इति विशेषस्तत्राह–ण्वुलेति ॥ तृजादयो नेति। नेदं ण्वुल्विषयकमेव ज्ञापकं, किन्तु सामान्यतः प्रत्ययमात्रविषयकमित्यर्थः ॥ देविक्रुशोः—। दीव्यतेर्हेतुमण्यन्तस्य 'किमकूजने' इति चुरादिण्यन्तस्य च ग्रहणम् ॥ चलनशब्दार्था–। 'चल कम्पने', 'चुप मन्दायां गतौ', 'कपि चलने', 'शब्द शब्दने' चुरादिः, 'रु शब्दे' ॥ चलन इत्यादि । 'युवोः–' इत्यनादेशः ॥ अनुदात्तेतश्च हलादेः । ननु सर्वोऽप्यनुदात्तेद् हलन्त एवेति तदन्तविधिं बाधित्वा सामर्थ्याद्धलादिरेव ग्रहीष्यते तत्किमादिग्रहणेनेति चेत् । अत्राहुः–आदिग्रहणाभावे हलन्तादित्यर्थः स्यात्, तथा हि सत्येधितेत्यादावातिप्रसङ्गः स्याज्जुगुप्सन इत्यादि च न सिध्येत् । अस्ति चेहानुदात्तेत्त्वं गुपादिष्ववयवेष्वचरितार्थस्यानुबन्धस्य समुदायविशेषकत्वादिति दिक् ॥ जुचङ्क्रम्य–। क्रमिद्रमी यङन्तौ 'क्रमु पादविक्षेपे' 'द्रम हम्ममीमृ गतौ' ॥ पूर्वेणेति । 'अनुदात्तेतश्च' इत्यनेन ॥ इह पदिग्रहणं सकर्मकार्थमिति वृत्तिकृतोक्तम् । भाष्ये तु अनभिधानादेव सकर्मकान्न भविष्यतीत्युक्तत्वात् । ज्ञापनार्थमेव तदित्याशयेनाह–बाधा मा भूदित्यादि ॥ परस्परमिति । 'निन्दहिंस–' इत्यादिसूत्रे हि तच्छीलादिषु वासरूपविधानात् तृजादयो नेति ज्ञापितम्, इह तु ताच्छीलिकेषु परस्परं नेति ज्ञापितमिति विवेक इति भावः ॥ क्रुध–। 'क्रुध क्रोधे' 'रुष रोषे' 'मडि भूषायाम्,' 'भूष अलंकारे' ॥ न यः। 'अय वय पय मय चय तय णय गतौ' इति पठितस्य नयतेर्नायं निर्देशः । अनुदात्तेत्त्वादेव युचः सिद्धत्वात्किं तु नेति पृथक् पदमिति मत्वाह–यकारान्तादिति ॥ क्नूयिता। क्ष्मायितेति । 'क्नूयी शब्दे उन्दे च', 'क्ष्मायी विधूनने' ॥ सूददीप–।'सूद क्षरणे,' 'दीपी दीप्तौ', 'दीक्ष मौण्ड्येज्यादौ' ॥ ताच्छीलिकेष्विति । परस्परमिति शेषः॥ प्रायिकमिति । न केवलं यथाश्रुतभाष्यमवलम्ब्य युञयोरेव समावेश इति मन्तव्यं, किन्तु प्रायिकत्व एव भाष्यस्य तात्पर्यम् । तेन गमेः 'लषपतपद–' इत्युकञ्विषये तृन्नपि । गन्ता । गामुकः । तथा 'वौ कषलस–' इति घिनुण्विषये युजपि । विकत्थी, विकत्थन इत्यादि सिध्यतीति भावः ॥ जल्प—। 'जप जल्प व्यक्तायां वाचि', 'भिक्ष भिक्षायां लाभेऽलाभे च', 'कुट्ट छेदने', 'लुण्ट स्तेये', चौरादिकाविमौ । अत्र व्याचख्युः–जल्पेः 'चलनशब्दार्थात्–' इति, भिक्षेः 'अनुदात्तेतश्च–' इति युचि प्राप्ते, कुट्टलुण्टयोः 'णेश्छन्दसि' इति इष्णुचि प्राप्ते, वृङस्तु 'आदृगमहनजन–' इति किकिनोः प्राप्तयोरयं विधिरिति ॥ षो ङीषर्थ इत्याह–वराकीति ॥ प्रजो–॥ 'जु' इति सौत्रो गत्यर्थः ॥ जिदृक्षि–। 'जि जये', 'जिअभिभवे', 'दृङ् आदरे', 'क्षि क्षये', 'क्षि निवासगत्योः', 'श्रिञ् सेवायाम्' 'विपूर्वः । 'व्यथ भयसञ्चलनयोः' नञ्पूर्वः, निपातनान्नञो धातुना समासे नलोपे ततः प्रत्ययः । 'अम गत्यादिषु' अभिपूर्वः ॥ प्रसवीति । 'षू प्रेरणे' अस्मादिनिः । 'षूङ् प्राणिगर्भविमोचने', 'षूङ् प्राणिप्रसवे' इमौ न गृह्येते, ... 'जिदृक्षि—' इत्यत्रैव प्रजुं पठित्वा पूर्वसूत्रं त्यक्तुमुचितम् । एवं हि पृथग्विभक्तिश्चकारश्च मास्त्विति सुवचम् ॥ स्पृहि—। 'स्पृह ईप्सायाम्', 'गृहू ग्रहणे', 'पत

लुच् । ३ । २ । १५८ । आद्यास्त्रयश्चुरादावदन्ताः । स्पृहयालुः । गृहयालुः । पतयालुः । दयालुः । निद्रालुः । तत्पूर्वो द्रा । तदो नान्तत्वं निपात्यते । तन्द्रालुः ॥ (वा॰) शीङो वाच्यः ॥ शयालुः ॥ (सू॰) दाधेट्सिशदसदो रुः । ३ । २ । १५९ । दारुः । धारुः । सेरुः । शद्रुः । सद्रुः ॥ (सू॰) सृघस्यदः क्मरच् । ३ । २ । १६० । सृमरः । घस्मरः । अद्मरः ॥ (सू॰) भञ्जभासमिदो घुरच् । ३ । २ । १६१ । भङ्गुरः । भासुरः । मेदुरः ॥ (सू॰) विदिभिदिच्छिदेः कुरच् । ३ । २ । १६२ । विदुरः । भिदुरम् । छिदुरम् ॥ (सू॰) इण्नशजिसर्तिभ्यः क्वरप् । ३ । २ । १६३ । इत्वरः । इत्वरी । नश्वरः । जित्वरः । सृत्वरः ॥ (सू॰) गत्वरश्च । ३ । २ । १६४ । गमेरनुनासिकलोपोऽपि निपात्यते । गत्वरी ॥ (सू॰) जागुरूकः । ३ । २ । १६५ । जागर्तेरूकः स्यात् । जागरूकः ॥ (सू॰) यजजपदशां यङः । ३ । २ । १६६ । एभ्यो यङन्तेभ्य ऊकः स्यात् । दशामिति भाविना नलोपेन निर्देशः । यायजूकः । जञ्जपूकः । दन्दशूकः ॥ (सू॰) नमिकम्पिस्म्यजसकमहिंसदीपो रः । ३ । २ । १६७ । नम्रः । कम्प्रः । स्मेरः । जसिर्नञ्पूर्वः क्रियासातत्ये वर्तते । अजस्रं सन्ततमित्यर्थः । कम्रः । हिंस्रः । दीप्रः ॥ (सू॰) सनाशंसभिक्ष उः । ३ । २ । १६८ । चिकीर्षुः । आशंसुः । भिक्षुः ॥ (सू॰) विन्दुरिच्छुः । ३ । २ । १६९ । वेत्तेर्नुम् इषेश्छत्वं च निपात्यते । वेत्ति तच्छीलो विन्दुः । इच्छति इच्छुः ॥ (सू॰) क्याच्छन्दसि । ३ । २ । १७० । देवाञ्जिगाति सुम्नयुः ॥

---

गतौ ' ॥ **त्रयश्चुरादाविति** । तेन णेरयादेशेन रूपसिद्धिरिति भावः ॥ यद्येवं णिचि उपधागुणवृद्धी स्यातामत आह— **अदन्ता इति** । ततश्चाल्लोपस्य स्थानिवत्त्वात्तदभावः ॥ **तत्पूर्व इति** । तच्छब्दस्य समासोऽपि निपातनादिति बोध्यम् । डुधाञ् श्रत्पूर्वः । श्रद्धालुः । धेटस्तु नेदं रूपम् । श्रत्पूर्वस्य तस्य प्रयोगाभावादिति व्याचख्युः । कथं कृपालुः, स्पर्धालुः । कृपां स्पर्धां च लातीति विग्रहे मृगय्वादित्वात्कुः ॥ **दाधेट्** । इदाञुदोदेडां त्रयाणामेव ग्रहणं, न तु दाण्दापोरित्याहुः ॥ **भंगुर इति** । ' चजोः ' इति कुत्वम् । अभिधानस्वभावाद्भञ्जेः कर्मकर्तर्य्येवेत्याहुः ॥ **विदिभिदि-** । विदेर्ज्ञानार्थस्यैव ग्रहणं, न तु लाभार्थस्य, व्याख्यानात् ॥ **छिदुरमिति** । कर्मकर्तरि प्रत्यय इति वृत्तिः । नैतद्भाष्ये दृष्टम् । तथा च माघः मुख्ये कर्तरि प्रायुङ्क्त—' प्रियतमाय वपुर्गुरुमत्सरच्छिदुरयादुरयाचितमङ्गना ' इति । इह अदुरिति च्छेदः ॥ **इत्वरः** । **इत्वरीति** । ' इण् गतौ ' ' ह्रस्वस्य पिति- ' इति तुक् । क्वित्वाद्गुणाभावः, ' टिड्ढा- ' इत्यादिना स्त्रियां ङीप् ॥ **जागुरूकः** । जागुरिति पञ्चम्यन्तं तद्व्याचष्टे—**जागर्त्तेरिति** ॥ ' जागरूकः ' इति सिद्धरूपमेव तु न निपातितम् । उत्तरसूत्रे ऊकस्यानुवृत्तिप्रसङ्गात् ॥ **यजजप-** । **यायजूक इति** । यजेर्यङि द्वित्वादि ' दीर्घोऽकितः ' इत्यभ्यासदीर्घः । अतो लोपे ' यस्य हलः ' इति लोपः ॥ **जञ्जपूक-इत्यादि** । ' जपजभदहदश ' इत्यादिना नुक्, वावदूकशब्दस्तु उलूकादयश्चेत्यत्र वक्ष्यते । माधवस्त्वाह—' कुर्वादिगणे वावदूक इति पाठादेव यङन्ताद्वदेरूकः प्रत्ययः ' इति ॥ **सनाशंस-** । सनिति प्रत्ययग्रहणात्तदन्तग्रहणम् । ' षणु दाने ', ' षण संभक्तौ ' इति धात्वोस्तु नेह ग्रहणम्, गर्गादिषु विजिगीषुशब्दस्य पाठात् । आशंसेति ' आङः शंसु इच्छायाम् ' इत्ययं गृह्यते, न ' शंसु स्तुतौ ' इति, आङा सह निर्देशात् ॥ **विन्दुरिच्छुः** । ' विद ज्ञाने ' इत्यस्यैव ग्रहणं, नेतरेषाम् । एवमिषेरपि इच्छार्थकस्यैव ग्रहणं, न तु, ' इष गतौ ', ' इष आभीक्ष्ण्ये ' इत्यनयोः, अनभिधानान्निपातनाद्वेति भावः । विन्दुशब्दस्तु पवर्गीयादिः ' विदि अवयवे ' अस्मान्मृगय्वादित्वात्कुप्रत्यये बोध्यः ॥ **क्याच्छन्दसि** । क्य इति क्यच्क्यङ्क्यषां सामान्यग्रहणम् । क्यान्तधातोश्छन्दसि विषये तच्छीलादिषु उप्रत्ययो भवतीति काशिका । क्य इति व्याख्यानात्कण्ड्वादियगपि गृह्यते । तेन ' तुरण्यवोऽङ्गिरसोनक्षन्त ' ' सपर्येम सपर्यवः ', ' यमस्य योनौ शकुनं भुरण्युम् ' इत्यादि सिद्धम् । ' तुरण त्वरायाम् ' । ' सपर पूजायाम् ' । भुरण धारणपोषणयोः' इत्येते कण्ड्वादिषु पठिताः । अथ कथं ' सन्तः प्रणयिवाक्यानि गृह्णन्ति ह्यनसूयवः ' इति भट्टपादाः । मृगय्वादिषु असूयुशब्दो द्रष्टव्य इति हरदत्तः ॥ **सुम्नयुरिति** । सुम्नशब्दात्क्यचि तदन्तादुः । ' न च्छन्दस्यपुत्रस्य ' इति निषेधात् ' क्यचि च ' इति ईत्वम्, ' अकृत्सार्व— ' इति दीर्घश्च न भवति ॥ **आदृ-** । ' ऋदोरप् ' इति वदादिति दकारो मुखसुखार्थो न त्वयं तकारस्तेन तात्परत्वाभावाद् इत्यनेन दीर्घोऽपि गृह्यते । तेन ततुरिर्जगुरिः—' तॄ प्लवनतरणयोः' इत्यस्य, ' गॄ निगरणे ' इत्यस्य च ' बहुलं छन्दसि ' इत्युत्त्वे रूपमिति प्राञ्चः । वस्तुतस्तु आदित्यादिप्रकृतिविशेषणमुदाहरणं प्रपञ्चमात्रम् । ' किकिनौ लिट् च ' इत्येतावन्मात्रमेव विवक्षितम् । तथा च वार्तिकम्—' किकिनावुत्सर्गश्छन्दसि सदादिभ्यो दर्शनात् ' इति । उदाहृतं च भाष्ये—' सेदिर्नेमिः ' इत्यादि । एवं स्थिते आदिति तपरकरणेऽपि न क्षतिरिति ध्वनयन्नाह—

---



१ भाविनेति—यङि कृते जायमानेनेत्यर्थः ॥

(सू) आदृगमहनजनः किकिनौ लिट् च ।३।२।१७१। आदन्तादृदन्ताद्गमादिभ्यश्च किकिनौ स्तश्छन्दसि तौ च लिड्वत् । पपिः सोमम् । ददिर्गाः । बभ्रिर्वज्रम् । जग्मिर्युवा । जघ्निर्वृत्रममित्रियम् । जज्ञिः ॥ (वा) भाषायां धाञ्कृसृगमिजनिनमिभ्यः ॥ दधिः । चक्रिः । सस्रिः । जग्मिः । जज्ञिः । नेमिः ॥ (वा) सासहिवावहिचाचलिपापतीनामुपसंख्यानम् ॥ यङन्तेभ्यः सहेत्यादिभ्यः किकिनौ पतेर्नीगभावश्च निपात्यते ॥ (सू) स्वपितृषोर्नजिङ् ।३।२।१७२। स्वप्नक् । तृष्णक् । तृष्णजौ । तृष्णजः । धृषेश्चेति वाच्यमिति काशिकादौ । धृष्णक् ॥ (सू) शॄवन्द्योरारुः ।३।२।१७३। शरारुः । वन्दारुः ॥ (सू) भियः क्रुक्लुकनौ ।३।२।१७४। भीरुः । भीलुकः ॥ (वा) क्रुकन्नपि वाच्यः । भीरुकः ॥ (सू) स्थेशभासपिसकसो वरच् ।३।२।१७५। स्थावरः । ईश्वरः । भास्वरः । पेस्वरः । कस्वरः ॥ (सू) यश्च यङः ।३।२।१७६। यातेर्यङन्ताद्वरच् स्यात् । अतो लोपः। तस्याचः परस्मिन्निति स्थानिवद्भावे प्राप्ते पदस्य चरमावयवे द्विर्वचनादौ च कर्तव्ये परनिमित्तोऽजादेशो न स्थानिवत् । तस्य यलोपं प्रति स्थानिवद्भावनिषेधाल्लोपो व्योरिति यलोपः । अल्लोपस्य स्थानिवत्त्वमाश्रित्यातो लोपे प्राप्ते वरे लुप्तं न स्थानिवत् । यायावरः ॥ (सू) भ्राजभासधुर्विद्युतोर्जिपॄजुग्रावस्तुवः क्विप् ।३।२।१७७। विभ्राट् । भाः । भासौ । धूः । धुरौ । विद्युत् । ऊर्क् । पूः । पुरौ । दृशिग्रहणस्यापकर्षाज्जवतेर्दीर्घः । जूः । जुवौ । जुवः । ग्रावशब्दस्य धातुना समासः सूत्रे निपात्यते । ततः क्विप् । ग्रावस्तुत् ॥ (सू) अन्येभ्योऽपि दृश्यते ।३।२।१७८। क्विप् । छित् । भिद् । दृशिग्रहणं विध्यन्तरोपसंग्रहार्थम् । क्वचिद्दीर्घः, क्वचित्सम्प्रसारणं, क्वचिद् द्वे, क्वचिद्ध्रस्वः । तथा च वार्तिकम् ॥ (वा) क्विब् वचिप्रच्छ्यायतस्तुकटप्रुजुश्रीणां दीर्घोऽसम्प्रसारणं च ॥ क्विब्वचीत्यादिना उणादिसूत्रेण केषांचित्सिद्धे तच्छीलादौ तृना बाधा मा भूदिति वार्तिके ग्रहणम् । वक्तीति वाक् । पृच्छतीति प्राट् । आयतं स्तौतीति आयतस्तूः । कटं प्रवते कटप्रूः । जूरुक्तः । श्रयति हरिं सा श्रीः ॥ (वा) द्युतिगमिजुहोतीनां द्वे च ॥ दृशिग्रहणादभ्याससंज्ञा । दिद्युत् । जगत् ॥ (वा) जुहोतेर्दीर्घश्च ॥ जुहूः । दॄ भये । अस्य ह्रस्वश्च । दीर्यते ददृत् ॥ (वा) ध्यायतेः संप्रसारणं च ॥ धीः ॥ (सू) भुवः संज्ञान्तरयोः ।३।२।१७९। मित्रभूर्नाम कश्चित् । धनिकाधमर्णयोरन्तरे यस्तिष्ठति विश्वासार्थं स प्रतिभूः ॥ (सू) विप्रसंभ्यो ड्वसंज्ञायाम् ।३।२।१८०। एभ्यो भुवो डुः स्यान्न तु संज्ञायाम् । विभुर्व्यापकः । प्रभुः स्वामी । संभुर्जनिता । संज्ञायां तु विभूर्नाम कश्चित् ॥ (वा) मितद्र्वादिभ्य उपसंख्यानम् ॥ मितं द्रवतीति

---

आदन्तादृदन्तादिति ॥ बभ्रिर्वज्रमिति । 'न लोका–' इति षष्ठीनिषेधाद् द्वितीया । किकिनोः स्थाने तिबादयो न, लिड्वदित्यतिदेशेन स्वरूपाबाधेनैव कार्यातिदेशात् । छान्दससूत्रद्वयोपन्यसनं 'भाषायां धाञ्—' इत्यादि वार्तिकविषयबोधनार्थम् । इह च वार्तिके गमिर्यद्यपि न दृश्यते, तथापि धातुवृत्तौ क्वचिद्वृत्तिपुस्तके च दर्शनादुपन्यस्तः ॥ जग्मिरिति । 'गमहनजन—' इत्युपधालोपः ॥ जघ्निरिति । 'अभ्यासाच्च' इति कुत्वम् ॥ दधिरिति । 'आतो लोपः–' ॥ नेमिरिति । एत्त्वाभ्यासलोपौ ॥ सासहीत्यादि । यङोऽतो लोपे यलोपः । अभ्यासदीर्घः ॥ नीगभावश्चेति । 'नीग्वञ्चु—' इत्यादिना प्राप्तस्य नीगागमस्याभाव इत्यर्थः ॥ तृष्णगिति । ङित्त्वान्न गुणः । नजिङ इकार उच्चारणार्थः ॥ क्रुकन्नपीति । अत एव 'भीरुभीलुकभीरुकाः' इत्यमरः ॥ ईश्वर इति । 'नेड्वशि–' इतीडभावः ॥पेस्वर इति । 'पिसृ पेसृ गतौ' ॥ कस्वर इति । 'कस गतौ' ॥ भ्राज–। 'आ क्वेः–' इत्युक्तत्वात्तच्छीलादिष्वयं क्विप् । 'भ्राजृ दीप्तौ', 'धुर्वी हिंसायाम्', 'द्युत दीप्तौ', 'ऊर्ज बलप्राणनयोः' । 'पॄ पालनपूरणयोः' । 'जु गतौ' सौत्रः । ग्रावपूर्वः, 'ष्टुञ् स्तुतौ' ॥ विभ्राडिति । 'व्रश्च–' इति षत्वम् । जश्त्वचर्त्वे ॥ धूरिति । 'राल्लोपः' इति वलोपः, 'र्वोः—' इति दीर्घः ॥ ऊर्गिति । 'चोः कुः' । 'रात्सस्य' इति नियमान्न संयोगान्तलोपः ॥ पूरिति । 'उदोष्ठ्यपूर्वस्य' इत्युत्वम् । 'र्वोः–' इति दीर्घः ॥ वाक् प्राडिति । इह दीर्घः सम्प्रसारणाभावश्च । सम्प्रसारणप्राप्तिस्तु 'वचिस्वपि–', 'ग्रहिज्यावयि–' इत्यादिना ॥ श्रयति हरिं श्रीरिति । प्राचा तु श्रयन्त्येतामिति कर्मणि क्विबुदाहृतस्तत्र 'कर्त्तरि कृत्' इति सूत्रविरोधः स्पष्ट एव । बाहुलकं तु अगतिकगतिः ॥ द्युति द्वे चेति । कृतेऽपि द्वित्वे अभ्याससंज्ञेह दुर्लभा, प्रत्यासत्त्या षाष्ठद्वित्व एव प्रवृत्तेरत एव आष्टमिके सा नेत्याशङ्कायामाह–दृशिग्रहणादिति ॥ दिद्युदिति । 'द्युतिस्वाप्योः' इत्यभ्यासस्य सम्प्रसारणम् ॥ जगदिति । 'गमः क्वौ' इति मलोपे तुक् । अत्र द्वे चेति चकारेण दीर्घः समुच्चीयमानो द्युतिगम्योर्न भवति, दीर्घश्रुत्या 'अचश्च' इति परिभाषोपस्थानादजन्तजुहोतेरेव संभवतीत्याशयेनाह–जुहोतेर्दीर्घश्चेति । जुहोतीति जुहूः । ह्रस्वश्चेति चकारेण द्वित्वं समुच्चीयते ॥ धीरिति । ध्यायतीति धीः । 'हलः' इति दीर्घः । ननु ध्यायति पुरुषो, न तु धीः, एवं जुहोत्यनया पुरुष इति सर्वसंमतत्वात्कथं तर्हि हि भवदुक्तार्थः संगच्छत इति चेद् । अत्राह हरदत्तः– करणस्य कर्तृत्वविवक्षायां क्विप् भवति ॥ भुवः संज्ञा । धनिकेत्यादि । तेन ग्रामयोरन्तरे यस्तिष्ठति तत्र नेति भावः । एतच्च दृशिग्रहणानुवृत्त्या लभ्यते ॥ 'नन्वेवं प्रतिभूशब्दः संज्ञेति फलितं, तत्र

मितद्रुः । शतद्रुः । शम्भुः । अन्तर्भावितण्यर्थोऽत्र भवतिः ॥ धः कर्मणि ष्ट्रन् । ३ । २ । १८१ । धेटो धाञश्च कर्मण्यर्थे ष्ट्रन् स्यात् । धात्री जनन्यामलकीवसुमत्युपमातृषु ॥ दाम्नीशसयुयुजस्तुतुदसिसिचमिहपतदशनहः करणे । ३ । २ । १८२ । दावादेः ष्ट्रन् स्यात्करणेऽर्थे । दान्त्यनेन दात्रम् । नेत्रम् ॥ तितुत्रतथसिसुसरकसेषु च ।७।२।९। एषां दशानां कृत्प्रत्ययानामिण् न स्यात्। शस्त्रम्। योत्रम् ।योक्त्रम् । स्तोत्रम् । तोत्रम्। सेत्रम् । सेक्त्रम् । मेढ्रम् । पत्त्रम् । दंष्ट्रा । नद्ध्री ॥ हलसूकरयोः पुवः । ३ । २ । १८३ । पूङ्पूञोः करणे ष्ट्रन् स्यात् । तच्चेत्करणं हलसूकरयोरवयवः । हलस्य सूकरस्य वा पोत्रम्।मुखमित्यर्थः ॥ अर्तिलूधूसूखनसहचर इत्रः । ३ । २ । १८४ । अरित्रम् । लवित्रम् । धुवित्रम् । सवित्रम् । खनित्रम् । सहित्रम् । चरित्रम् ॥ पुवः संज्ञायाम् । ३ । २ । १८५ । पवित्रम् । येनाज्यमुत्पूयते यच्चानामिकावेष्टनम् ॥ कर्त्तरि चर्षिदेवतयोः । ३ । २ । १८६ । पुव इत्रः स्याद् ऋषौ करणे देवतायां कर्त्तरि । ऋषिर्वेदमन्त्रः । तदुक्तमृषिणेति दर्शनात् । पूयतेऽनेनेति पवित्रम् । देवतायां तु अग्निः पवित्रं स मा पुनातु ॥ ॥ इति पूर्वकृदन्तम् ॥ ॥

## अथोणादयः ।

कृवापाजिमिस्वदिसाध्यशूभ्य उण् ॥ करोतीति कारुः शिल्पी कारकश्च । आतो युक् [१] वातीति वायुः । पायुर्गुदम् । जयत्यभिभवति रोगान् जायुरौषधम् । मिनोति प्रक्षिपति देहे उष्माणमिति मायुः पित्तम् । स्वादुः ।

---

संज्ञायामित्येव सिद्धं किमन्तरग्रहणेन । अत्राहुः यावद्द्रव्यभाविन्यः संज्ञाः । प्रतिभूशब्दस्तु सत्येव तस्मिन् ऋणप्रदानेन निवर्तत इत्युभयोर्भेद इति ॥ शं सुखं भावयतीति शम्भुरित्यर्थाभ्युपगमनायाह-अन्तर्भावितेति । शं भवति सुखस्वरूपो भवतीति शम्भुरित्यन्ये । शं भवत्यस्मादिति व्युत्पत्तिस्तु अपादाने डुप्रत्ययाभावाच्चिन्त्येति माधवः ॥ धः कर्मणि । कर्मणीति नोपपदम् । 'ह्वावामश्च' इत्यनन्तरमेव 'धः ष्ट्रन्-' इति वक्तव्ये पृथक्कर्मग्रहणाद्व्याख्यानाद्वेत्याशयेनाह-कर्मण्यर्थे इति । अत एव 'धीयते पीयते' इति धात्री स्तनदायिनीत्यादि व्याचक्षते ॥ दाम्नी-मेढ्रमिति । 'ह्रोढः' धत्वष्टुत्वढलोपाः ॥ दंष्ट्रेति । षित्त्वेपि ङीष् इह न भवति 'अनित्यः षितां ङीष्' इत्युक्तत्वात् । अन्ये त्वजादिपाठाट्टापमाहुः ॥ नद्ध्रीति । 'नहो धः' इति धत्वम् । 'झषस्तथोर्धोऽधः' जश्त्वम् । सूत्रे 'दश—' इति नलोपिनो निर्देशो ज्ञापकः- 'क्वचिदकित्यपि दंशेर्नलोपो भवति' इति । तेन 'दंश दशने' इत्यस्माल्ल्युटि दशना दन्ता इति सिद्धम् । न च संनिधानात् ष्ट्रन्येव नलोपः स्यादिति वाच्यम्, 'शुनो दन्तदंष्ट्रा-' इति निर्देशात् ॥ तच्चेत्करणमित्यादि । एतेन हलसूकरयोरभिधेयत्वमुपपदत्वं च निरस्तरम् ॥ मुखमित्यर्थ इति । तत्रैव रूढिरिति भावः ॥ अर्तिलूधूसू । 'धू विधूनने' इति कुटादिरेव गृह्यते, निरनुबन्धकत्वात् । अत एव 'गाङ्कुटा' इति ङित्त्वाद्गुणनिषेधे उवङ् तदाह-धुवित्रमिति । पुवः-।पूङ्पूञोरुभयोर्ग्रहणमविशेषात् ॥ करण इत्यनुवृत्तेराह-येनाज्यमिति ॥ कर्त्तरि चर्षि-इत्रः स्यादिति । करणे कर्त्तरि चेत्यर्थः ॥ काशिकानुसारेण यथासंख्यं व्याचष्टे-ऋषौ करणे इति । 'कर्त्तरि कृत्' इति सूत्रस्थभाष्यकैयटयोस्तु 'यथासंख्यं न' इति गम्यत इति शब्दकौस्तुभे स्थितम् ॥ ॥ इति पूर्वकृदन्तम् ॥

## अथोणादयः ।

कृवापा-।'डुकृञ् करणे', 'वा गतिगन्धनयोः', 'पा पाने', 'पा रक्षणे', 'जि अभिभवे,' 'डुमिञ् प्रक्षेपणे', 'स्वद आस्वादने', 'साध संसिद्धौ', 'अशू व्याप्तौ' ॥ 'विश्वकर्मणि ना कारुस्त्रिषु कारकशिल्पिनोः' इति मेदिनीकोशः॥ 'कारुः शिल्पिनि कारके' इति धरणिकोशस्तदेतदभिप्रेत्याह-कारुरित्यादि । आद्ये योगरूढिर्द्वितीये तु योगमात्रमिति विवेकः । अत एव द्वितीये धात्वर्थे प्रति कारकान्वयो भवत्येव । तथा च भट्टिः-' राघवस्य ततः कार्ये कारुर्वानरपुङ्गवः । सर्ववानरसेनानामाश्वागमनमादिशत्' इति पिबत्यनेन तैलादिकमिति पायुर्गुदस्थानम्। 'गुदं त्वपानं पायुर्ना' इत्यमरः।पाति रक्षतीति विग्रहे रक्षकोपि । तथा च मन्त्रः- 'भुवस्तस्य स्वतवा पायुरग्ने' इति। 'स्वतवान्पायौ' इति नस्य रुत्वम्॥ 'अगदो जायुः' इत्यमरः । पुँल्लिङ्गसाहचर्याज्जायुः पुंसि॥ 'मायुः पित्तं कफश्लेष्मा' इत्यमरः । गोपूर्वाद्वा वाचं विकृतां मिनोति प्रक्षिपतीति गोमायुः शृगाल इत्युज्ज्वलदत्तः । वस्तुतस्तु मायुः शब्दः, 'यत्पर्जन्यो मायुमक्रत गोमायुरेकः, अजमायुरेकः' इत्यादौ वेदभाष्यकारादिभिस्तथैव व्याख्यातत्वात् ॥ स्वदते रोचते

---

१ शतधा द्रवतीति विग्रहः ॥ २ दाम्नीत्यादि-अत्र दशेति कृतनलोपस्य दंशधातोर्निर्देशाक्क्तित्यपि क्वचिदस्य नकारो लुप्यते । तेन दन्तौ 'दशना' इति प्रयोगः सिध्यति । न च निपातनस्य बाधकत्वमेवाति सर्वत्रैवास्य नलोप इति 'दंष्ट्रा' इत्यनुपपन्नमिति शंक्यम्, 'शुनो दन्तदंष्ट्रा' इति सूत्रानिर्देशेन क्वाचित्कत्वस्यैव कल्पनात् ॥

साध्नोति परकार्यं साधुः । अश्नुते आशु शीघ्रम् । आशुर्व्रीहिः पाटलः स्यात् ॥ (उ) छन्दसीणः ॥ मा न आयौ ॥ (उ) दॄसनिजनिचरिचटिभ्यो ञुण् ॥ दीर्यत इति दारुः । स्नुः प्रस्थः सानुरस्त्रियाम् । जानु । जानुनी । इह जनिवध्योश्चेति न निषेधः, अनुबन्धद्वयसामर्थ्यात् । चारु रम्यम् । चाटु प्रियं वाक्यम् । मृगय्वादित्वात्कुप्रत्यये चटु इत्यपि ॥ (उ) किंजरयोः श्रिणः ॥ किं शृणातीति किंशारुः सस्यशूकं बाणश्च । जरामेति जरायुः । गर्भाशयो जरायुः स्यात् ॥ (उ) त्रो रश्च लः ॥ तरन्त्यनेन वर्णा इति तालुः ॥ (उ) कृके वचः कश्च ॥ कृकेन गलेन वक्तीति कृकवाकुः।कृकवाकुर्मयूरे च सरटे चरणायुधे इति विश्वः ॥ (उ) भृमृशीतॄचरित्सरितनिधनिमिमस्जिभ्य उः। भरति बिभर्ति वा भरुः । हरिर्हरश्च । म्रियन्तेऽस्मिन् भूतानि मरुर्निर्जलदेशः । शेते शयुरजगरः । तरुर्वृक्षः । चरन्ति भक्षयन्ति देवता इमामिति चरुः । त्सरुः खड्गादिमुष्टिः । तनुः स्वल्पम् । स्त्रियां मूर्त्तिस्तनुस्तनूः । धनुः शस्त्रविशेषः । धनुषा च धनुं विदुः । धनुरिवाजनि वक्र इति श्रीहर्षः । मयुः किन्नरः । मद्गुः

---

इति स्वादुः विशेष्यनिघ्नोयम्॥एवं साधुरपि॥**आशु शीघ्रमिति।** विलम्बाभावमात्रे क्लीबम्, तद्विशिष्टद्रव्यपरत्वे तु त्रिलिङ्गम्। 'अथ शीघ्रं त्वरितम्' इत्युपक्रम्य 'क्लीबे शीघ्राद्यसत्त्वे स्यात्त्रिष्वेषां मेधगामि यत्' इत्यमरः । व्रीहौ पुंस्येव ॥ 'उणादयो बहुलम्' इति बहुलवचनादन्यस्मादप्युण् भवति । 'रह त्यागे' गृहीत्वा चन्द्रं रहति त्यजतीति राहुः ॥ 'वस निवासे' वसत्यस्मिन्सर्वमिति, सर्वत्रासौ वसतीति वा वासुः । वासुश्चासौ देवश्च वासुदेवः । वसुदेवस्यापत्यमित्यस्मिन्नर्थे 'ऋष्यन्धकवृष्णिकुरुभ्यश्च' इत्यणि कृते वासुदेव इति व्युत्पत्त्यन्तरमिति दिक् ॥ **छन्दसीणः ।** उणनुवर्तते । एति गच्छतीत्यायुः । 'मान आयौ' इति आयुशब्दो मनुष्यपर्यायेषु वैदिकनिघण्टौ पठितः । अत एव 'त्वामग्ने प्रथममायवे', 'मानस्तोके तनये मान आयौ' इत्यादिमन्त्रेषु वेदभाष्ये तथैव व्याख्यातम् । अर्वाचीनास्तु–'छन्दसीणः' इति सूत्रं बहुलवचनाद्भाषायामपि प्रवर्तत इति स्वीकृत्य 'आयुर्जीवितकालो ना' इत्यमरग्रन्थे आयुशब्दमुकारान्तं व्याचख्युः । ननु 'एतेर्णिच्च' इत्युस्प्रत्यये सकारान्तो वक्ष्यमाण आयुःशब्दस्तु लोकवेदयोर्निर्विवाद एव । अत एव जटा आयुरस्येति विग्रहे 'गृध्रं हत्वा जटायुषम्' इति रामायणप्रयोगो, 'यदि त्रिलोकीगणनापरा स्यात्तस्याः समाप्तिर्यदि नायुषः स्यात्' इति श्रीहर्षप्रयोगश्च संगच्छते । तथा च 'आयुर्जीवितकालो ना' इत्यत्रायुःशब्दः सकारान्त इत्येव व्याख्यायतां किमुकारान्ताभ्युपगमेनेति चेद् । अत्राहुः–सकारान्त आयुःशब्दो नपुंसक इति तस्य पुँल्लिङ्गता नेत्याशयेन तथोक्तमिति । अन्ये तु 'छन्दसीणः' इति सूत्रस्य भाषायां प्रवृत्त्यभावे 'मा वधिष्ट जटायुं माम्' इति भट्टिप्रयोगः, 'तटीं विन्ध्यस्याद्रेरभजत जटायोः प्रथमजः' इति विन्ध्यवर्णने अभिनन्दोक्तप्रयोगश्च न संगच्छेतेत्याहुः । वस्तुतस्तु जटां याति प्राप्नोतीति जटायुः मृगय्वादित्वात्कुः, आयात्यायुः । एवं च 'जटायुषा जटायुं च वियादायुं तथायुषा' इति द्विरूपकोशः, 'वायुना जगदायुना' इति वर्णविवेकश्च सुसाध इति दिक् ॥ **दॄसनि–।** 'दॄ विदारणे', 'षणु दाने', 'जन जनने', 'चर गतौ', 'चट भेदने' ॥ **दार्विति ।** 'काष्ठं दार्विन्धनं त्वेधः' इत्यमरः ॥ **चाट्विति ।** 'चटु चाटु प्रियं वाक्यम्' इति हट्टचन्द्रः । 'चाटुर्नरि प्रियोक्तिः स्यात्' इति रत्नमालाकोशः । नरि पुंसि । 'चकर च किल चाटून् प्रौढयोषिद्वदस्य' इति माघः । माघे तु नपुंसकमपि दर्शितम्–'चाटु चाकृतकसंभ्रममासाम्' इति ॥ **किंजरयोः–।** 'शॄ हिंसायाम्', 'इण् गतौ' आभ्यामुण् स्यात् ॥ **त्सरुरिति ।** 'किंशारुर्ना सस्यशूके विशिखे कङ्कपक्षिणि' इति मेदिनीकोशः॥ **त्रो रश्च लः ।** 'तॄ प्लवनतरणयोः' त्रः रश्चेति च्छेदः । केचित्तु ऋ इति प्रश्लिष्य द्वयोरपि सवर्णदीर्घे त्रौ तयोस्त्रोरित्युक्त्वा 'ऋ गतौ' इत्यस्मादपि ञुण् रस्य ल इति व्याख्याय इयर्ति अर्यते वा आलुः।शाकविशेषो घटी चेत्याहुः। 'कर्कर्यालुर्गलन्तिका'॥**भृमृशी–।** 'भृञ् भरणे', 'मृङ् प्राणत्यागे', 'शीङ् स्वप्ने', 'तॄ प्लवनतरणयोः', । 'चर गतौ', अयं भक्षणेपि, 'त्सर छद्मगतौ', 'तनु विस्तारे' 'धन धान्ये', 'डुमिञ् प्रक्षेपणे', 'टुमस्जो शुद्धौ' 'भरुः स्वर्णे हरे पुंसि' इति मेदिनी । 'भरुर्भर्तृकनकयोः' इति हेमचन्द्रः ॥ **शयुरिति ।** 'अजगरे शयुर्वाहसः' इत्यमरः ॥ **तरुरिति ।** तरन्ति नरकमनेन रोपकाः ॥ **चरुरिति ।** अनवस्रावितान्तरूष्मपक्व ओदन इति याज्ञिकाः । तृन्नुचर्वधिकरणेप्येवमुक्तम् । 'उगवादिभ्यो यत्' इति सूत्रे कैयटस्त्वाह–स्थालीवाची चरुशब्दस्तात्स्थ्यादोदने भाक्त इति ॥ '**तनुः** काये त्वचि स्त्री स्यात्त्रिष्वल्पे विरले कृशे' इति मेदिनी॥'**धनुः** पुमान् प्रियालद्रौ राशिभेदे शरासने:' इति नान्ते मेदिनी॥ विश्वप्रकाशमुदाहरति—**धनुषा चेत्यादिति ।** धनुषा सार्द्धं धनुं विदुरित्यर्थः । 'स्यात्तनुस्तनुषा सार्द्धम्' इत्यतः सार्द्धमित्यनुषज्यते ॥ 'शुद्धवंशजनितोपि गुणस्य स्थानतामनुभवन्नपि शक्रः । क्षेप्तुरेनमृजुमाशु सपक्षं सायकम्' इति श्रीहर्षश्लोकशेषः ॥ 'धनुर्वंशविशुद्धोपि निर्गुणः किं करिष्यति' । इति धन्वन्तरिः । इह पूर्वत्र च धनुरिति नकारान्तः सकारान्तो वा बोध्यः।न च सकारान्तधनुःशब्दो नपुंसक एवेति शङ्क्यम्, 'अथास्त्रियां धनुश्चापौ' इत्यमरोक्त्या तस्यापि पुंस्त्वात् ॥ **किंनर इति ।** 'तुरंगवदनो मयुः' इत्यमरः । 'मीनाति-मिनोति–'. इत्यस्य तु नेह बाहुलकात् । **मयुस्तुरंगवदने** मृडोपि **मयुरिष्यते**' इति विश्वः । मज्जति पानीये इति मद्गुः ॥



---

१ नकारान्त इति–कोशेषु स्वरगणना न क्रियते इत्युकारान्तेऽपि नकारान्तव्यवहार इति बोध्यम् ॥

पानीयकाकिकेति रभसः । न्यङ्क्वादित्वात्कुत्वं जश्त्वेन सस्य दः ॥ (उ) अणश्च ॥ लवलेशकणाणवः । चात्कटिवटिभ्याम् । कटति रसनां कटुः । वटतीति वटुः ॥ (उ) धान्ये नित् ॥ धान्ये वाच्येऽण उप्रत्ययः स्यात् स च नित् । नित्त्वादाद्युदात्तः । प्रियङ्गवश्च मेणवश्च मे । व्रीहिभेदस्त्वणुः पुमान् । निद्ग्रहणं फलिपाटीत्यादिसूत्रमभिव्याप्य सम्बध्यते ॥ (उ) शॄस्वृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्च ॥ शृणातीति शरुः । शरुरायुधकोपयोः । स्वर्यन्ते प्राणा अनेन स्वरुर्वज्रम् । स्नेहुर्व्याधिः, चन्द्र इत्यन्ये । त्रपु सीसम् । पुंसि भूम्न्यसवः प्राणाः । वसुर्हदेऽग्नौ योक्त्रेंशौ वसु तोये धने मणौ । हनुर्वक्त्रैकदेशः । क्लेदुश्चन्द्रः । बन्धुः । मनुः । चात् बिदि अवयवे । बिन्दुः ॥ (उ) स्यन्देः सम्प्रसारणं धश्च ॥ देशे नदविशेषेऽब्धौ सिन्धुर्ना सरिति स्त्रियामित्यमरः ॥ (उ) उन्देरिच्चादेः ॥ उनत्ति इन्दुः ॥ (उ) ईषेः किच्च ॥ ईषेरुः स्यात्स च कित् आदेरिकारादेशश्च । ईषते हिनस्ति इषुः शरः । इषुर्द्वयोः ॥ (उ) स्कन्देः सलोपश्च ॥ कन्दुः ॥ (उ) सृजेरसुम् च ॥ चात्सलोप उप्रत्ययश्च । रज्जुः ॥ (उ) कृतेराद्यन्तविपर्ययश्च ॥ ककारतकारयोर्विनिमयः । तर्कुः सूत्रवेष्टनम् ॥ (उ) नावञ्चेः॥ न्यङ्क्वादित्वात्कुत्वम् नियतमञ्चति न्यङ्कुर्मृगः॥(उ) फलिपाटिनमिमनिजनां गुक्पटिनाकिधतश्च ॥ फलेर्गुक् । फल्गुः। पाटेः पटिः । पाटयतीति पटुः । नम्यतेऽनेन नाकुर्वल्मीकम् । मन्यते इति मधु । जायते इति जतु॥(उ)वलेर्गुक् च ॥ वल संवरणे । वल्गुः ॥ (उ) शः कित्सन्वच्च ॥ श्यतेरुः स्यात्स च कित्सन्वच्च । शिशुर्बालः ॥ (उ) यो द्वे च ॥ ययुरश्वोऽश्वमेधीयः । सन्वदिति प्रकृते द्वेग्रहणमित्त्वनिवृत्त्यर्थम् ॥ (उ) कुर्भ्रश्च ॥

---

अणश्च । 'अण शब्दे' अस्मादुप्रत्ययः स्यात् ॥ चादिति । 'कटे वर्षादौ', 'वट वेष्टने' । कटति रसनामिति 'कटुः स्त्री कटुरोहिण्यां लताराजिकयोरपि । नपुंसकमकार्ये स्यात्पुँल्लिङ्गो रसमात्रके । त्रिषु तद्वत्सुगन्ध्योश्च मत्सरेऽपि खरेऽपि च' इति। वटतीति वटुः । 'वटुर्द्विजसुतः स्मृतः' इति संसारावर्त्तः । नटवटुरिति तूपचारात् ॥ अभिव्याप्येति । यद्यपि 'फलिपाटि–' इति सूत्रं यावदनुवर्तत इति न्यासग्रन्थेन मर्यादीकृत्येत्यपि प्रतीयते तथाप्यभिव्याप्येवोचितम्, 'पिबतं सौम्यं मधु' इत्यादौ मधुशब्दस्याद्युदात्ततादर्शनात्, 'वोतो गुणवचनात्' इति सूत्रे हरदत्तेनाप्यभिव्याप्येति स्पष्टमभिधानाच्चेति भावः ॥ शॄस्वृस्निहि–। 'शॄ हिंसायाम्', । 'स्वृ शब्दोपतापयोः', । 'ष्णिह उपतापे', 'त्रपूष् लज्जायाम्', 'असु क्षेपणे', 'वस निवासे', 'हन हिंसागत्योः', 'क्लिदू आर्द्रीभावे', 'बन्ध बन्धने', 'मन ज्ञाने' ॥ शरुरिति । 'शरुः कोपे शरे वज्रे' इति हेमचन्द्रः ॥ स्वरुर्वज्रमिति । 'शतकोटिः स्वरुः शंवः' इत्यमरः ॥ त्रपु सीसमिति । तद्धि अग्निं दृष्ट्वा त्रपते लज्जते इव 'रङ्गसीसकयोस्त्रपु' इति मेदिनी ॥ अस्यन्ति क्षिपन्ति शरीरमित्यसवः प्राणाः ॥ हनुरिति । 'हनुः पुमानधरो गण्डात्' इति वररुचिकोशः । स्त्रीलिङ्गोऽप्ययम् 'हनुर्हट्टविलासिन्यां नृत्यारम्भे गदे स्त्रियाम्। द्वयोः कपोलावयवे' इति मेदिनी कोशः । अतिशायने मतुप् । हनुमान् । 'अन्येषामपि दृश्यते' इति दृशिग्रहणात्पाक्षिको दीर्घः । हनूमान् ॥ स्नेहेन बध्नातीति बन्धुः । प्रज्ञादित्वाद्बान्धवः । 'बन्धुर्बन्धूकपुष्पे स्याद्बन्धुर्भ्रातरि बान्धवे' इति विश्वः ॥ मनुरादिराजो मन्त्रश्च ॥ स्यन्देः–। 'स्यन्दू प्रस्रवणे' ॥ उन्देः–। 'उन्दी क्लेदने' ॥ ईषेः–। 'ईष गतिहिंसादानेषु' ॥ स्कन्देः–। 'स्कन्दिर् गतिशोषणयोः' ॥ कन्दुरिति । स्कन्दत्यस्मिन् जनताप इति व्युत्पत्त्या भोगस्थानमिति केचित् । अन्ये तु स्कन्दति शोषयतीति कन्दुर्लोहादिपात्रमित्याहुः । अत एव 'क्लीबे'–म्बरीषं भ्राष्ट्रो ना कन्दुर्वास्वेदनी स्त्रियाम्' इत्यमरः । कन्दुर्वा ना इति पूर्वेणान्वयाद्वा पुमानित्यर्थः ॥ सृजेः–। 'सृज विसर्गे' सृजतीति रज्जुः स्त्रियाम् । आगमसकारस्य श्चुत्वेन शः, जश्त्वेन जः । 'सृजेरम् च' इति सुवचमिति नव्याः । 'रज्जुर्वेण्यां गुणे योषित्' इति मेदिनी ॥ कृतेराद्यन्त । 'कृती छेदने' । तर्कुरिति । कृत्यतेऽनेनेति तर्कुः सूत्रवेष्टनं यन्त्रविशेषः । 'तर्कुटी सूत्रला तर्कुः' इति हारावली ॥ नावञ्चेः । 'अञ्चु गतौ' । 'न्यङ्कुर्मुनौ मृगे पुंसि' इति मेदिनी ॥ फलिपाटि–॥ 'फल निष्पत्तौ', 'पट गतौ' ण्यन्तः, 'णम प्रह्वत्वे शब्दे', 'मन ज्ञाने', 'जनी प्रादुर्भावे' एभ्य उः स्यादेषाञ्च यथाक्रमं गुगागमः,\ पटि नाकि ध त इत्यादेशाश्च भवन्ति । इह एकापि षष्ठी विषयभेदाद्भिद्यते । गुगागमे हि फलेरवयवषष्ठी, पट्याद्यादेशचतुष्टयविधौ तु पाट्यादिभ्यः स्थानषष्ठी, सापि घतयोर्विधौ अन्तेऽप्युपसंह्रियत इति विवेकः । 'अनागमकानां सागमका आदेशाः' इति पक्षे स्थानषष्ठ्येवेति बोध्यम् ।। 'फल्गुवसारेऽभिधेयवत् । नदीभेदे मलय्वां स्त्री' इति मेदिनी ॥ नाकुर्वल्मीकमिति । ·'वामलूरश्च नाकुश्च वल्मीकं पुंनपुंसकम्' इत्यमरः ॥ मध्विति । 'मधुश्चैत्रे च दैत्ये च मद्ये पुष्परसे मधु' इति हेमचन्द्रः । 'मकरन्दस्य मद्यस्य माक्षिकस्यापि वाचकः । अर्द्धर्चादिगणे पाठात्पुंनपुंसकयोर्मधु' इति शाश्वतः ॥ वलेः–। 'वल संवरणे' इति दन्त्योष्ठ्यादिः । 'वल्गु स्याच्छगले पुंसि सुन्दरे चाभिधेयवत्' इति मेदिनी । यत्तु उज्ज्वलदत्तेन 'वलेर्गुक् च' इति ओष्ठ्यादित्वात् 'वल प्राणने' इत्युपन्यस्तं, तल्लक्ष्यविरोधादुपेक्ष्यम् । 'अयं नामावदति वल्गु वो गृहे' इत्यादौ दन्त्योष्ठ्यपाठस्य निर्विवादत्वात् ॥ शः कित्–। 'शो तनूकरणे' अस्मादुप्रत्ययः। 'आदेच उपदेशे' इत्यात्वं, द्वित्वं, 'सन्यतः' इत्यभ्यासस्येत्त्वम् । 'आतो लोप इटि च' इत्याकारलोपः । शिशुः ॥ यो द्वे च । 'या प्रापणे' ॥ कुर्भ्रश्च । 'भृञ् भरणे' अस्मात्कुप्रत्ययो धातोर्द्वित्वञ्च ।

बभ्रुर्मुन्यन्तरे विष्णौ बभ्रू नकुलपिङ्गलौ । चादन्यतोऽपि । चक्रुः कर्ता । जत्रुर्हन्ता । पपुः पालकः ॥ (उ) पॄभिदि-व्यधिगृधिधृषिभ्यः ॥ कुः स्यात् । पुरुः भिनत्ति भिन्दुर्वज्रम् । ग्रहिज्येति सम्प्रसारणम् । विरहिणं विध्यति विधुः । विधुः शशाङ्के कर्पूरे हृषीकेशे च राक्षसे । गृधुः कामः । धृषुर्दक्षः ॥ (उ) कृग्रोरुच्च ॥ करोतीति कुरुः । गृणातीति गुरुः ॥ (उ) अपदुःसुषु स्थः ॥ सुषामादिषु चेति षत्वम् । अपष्ठु प्रतिकूलम् । दुष्ठु । सुष्ठु ॥ (उ) रपेरि-च्चोपधायाः ॥ अनिष्टं रपतीति रिपुः ॥ (उ) अर्जिदृशिकम्यमिपशिबाधामृजिपशितुग्धुग्दीर्घहकारश्च ॥ अर्जयति गुणान् ऋजुः । सर्वानविशेषेण पश्यतीति पशुः । कन्तुः । अन्धुः कूपः । पांशुर्ना न द्वयो रजः । तालव्या अपि दन्त्याश्च सम्बसूकरपांसवः । बाधते इति बाहुः । बाहुः स्त्रीपुंसयोर्भुजः ॥ (उ) प्रथिम्रदिभ्रस्जां सम्प्रसारणं सलोपश्च ॥ त्रयाणां कुः सम्प्रसारणं भ्रस्जेः सलोपश्च । पृथुः । मृदुः । न्यङ्क्वादित्वात्कुत्वम् । भृज्जति तपसा भृगुः ॥ (उ) लङ्घिबंह्योर्नलोपश्च ॥ लघुः ॥ (उ) बालमूललघ्वलमङ्गुलीनां वा लो रत्वमापद्यते ॥ रघुर्नृपभेदः । बहुः ॥ (उ) ऊर्णोतेर्नुलोपश्च ॥ ऊरु सक्थि ॥ (उ) महति ह्रस्वश्च ॥ उरु महत् ॥ (उ) श्लिषेः कश्च ॥ श्लिष्यतीति श्लिकुर्भृत्यः । उच्यतो ज्योतिश्च ॥ (उ) आङ्परयोः खनिशॄभ्यां डिच्च ॥ आखनतीत्याखुः । परं श्रृणातीति परशुः । पृषोदरादित्वादकारलोपात्पर्शुरपि ॥ (उ) हरिमितयोर्द्रुवः ॥ द्रुगतावस्माद् हरिमितयोरुपपदयोः कुः स च डित् । हरिभिर्ह्रियते हरिद्रुर्वृक्षः । मितं द्रवति मितद्रुः समुद्रः ॥ (उ) शते च ॥ शतधा द्रवति शतद्रुः । बाहुलकात्केवलादपि । द्रवत्यूर्ध्वमिति द्रुर्वृक्षः शाखा च । तद्वान् द्रुमः ॥ (उ) खरुशङ्कुपीयुनील-

---

भरतीति बभ्रुः ॥ धरणिकोशस्थमाह—बभ्रूरित्यादि । 'बभ्रुर्वैश्वानरे शूलपाणौ च गरुडध्वजे । विशाले नकुले पुंसि पिङ्गले त्वभिधेयवत्' इति मेदिनीकोशः ॥ चादन्यतोऽपीति । 'अः कुश्च' इति वक्तव्ये प्राक् प्रत्ययनिर्देशादित्येके । अश्चेति प्रकृतिसंसृष्टेन चकारेण प्रकृत्यन्तरसमुच्चयादित्यन्ये ॥ पॄभिदि— 'पॄ पालनपूरणयोः', 'भिदिर् विदारणे', 'व्यध ताडने', 'गृधु अभिकांक्षायाम्', 'ञिधृषा प्रागल्भ्ये' ॥ पुरुरिति । कुप्रत्यये परत 'उदोष्ठ्यपूर्वस्य' इत्युत्वे रपरत्वम् । 'पुरुः प्राज्येऽभिधेयवत् । पुंसि स्याद्देवलोके च नृपभेदपरागयोः' इति मेदिनी ॥ 'विधुः शशाङ्के' इत्यादि तु विश्वकोशः । इह सूत्रे 'धृषिहृषिभ्यश्च' इति पठित्वा हृषुर्हर्षः । 'सूर्याग्निशशिनिराहवोऽपि हृषवः' इति केचित् ॥ कृग्रोरुच्च । 'डुकृञ् करणे', 'गॄ शब्दे' आभ्यां कुः स्यादुकारोऽन्तादेशश्च । 'उरण्रपरः' । 'कुरुर्नृपान्तरे भक्ते पुमान् पुंभूम्नि नीवृति' इति मेदिनी ॥ अपदुःसु—'ष्ठा गतिनिवृत्तौ' ॥ सुषामेत्यादि । एतच्च न्यासाद्यनुरोधेनोक्तम् । वार्तिककृता तु 'स्थास्थिन्स्थूणाम्' इत्युपसंख्यातम्[१] । 'अपष्ठुः पुंसि वाले च वामे स्यादन्यलिङ्गकः' इति मेदिनी । वामे प्रतिकूले । एषां त्रयाणां मृगय्वादिपाठेन सिद्धत्वात्सूत्रमिदं न्यासकारस्य न संमतमिति रक्षितः ॥ अर्जिदृशि— 'अर्ज अर्जने' अस्य ऋजिरादेशः, दृशेः पशिरादेशः, कमेस्तुगागमः, 'अम् रोगे, गत्यादौ वा' अस्य धुगागमः, 'पशि नाशने' सौत्रो धातुरस्य दीर्घः, 'बाधृ लोडने' अस्य हादेशः, षड्भ्योऽपि कुप्रत्ययः स्यादित्यर्थः ॥ अविशेषेणेति । चादिगणे पश्विति पठितम् । 'पशुः दृश्यर्थमव्ययम्' इति धरणिः । कन्तुः कन्दर्पः । 'इः कन्तुर्मकराङ्कः' इति त्रिकाण्डशेषः । पांसुरिति । 'पडि पसि नाशने' चुरादिर्ण्यन्तः ॥ स्त्रीपुंसयोरिति । उक्तं ह्यमरेण 'द्वौ परौ द्वयोः । भुजबाहू' इति । परौ द्वौ भुजबाहुशब्दौ द्वयोः स्त्रीपुंसयोरिति तदर्थः । अकारान्तोऽप्ययम् । अत एव 'बाहोऽस्त्रभुजयोः पुमान्' इति दामोदरः ॥ 'बाहा भुजे पुमान्मानभेदाश्ववृषवायुषु' इति मेदिन्यां टाबन्तोऽप्ययम् ॥ प्रथिम्रदि— 'प्रथ प्रख्याने', 'म्रद मर्दने', 'भ्रस्ज पाके' प्रथते इति । 'पृथुः स्यान्महति त्रिषु । त्वक्पत्र्यां कृष्णजीरेऽथ पुमानग्नौ नृपान्तरे' इति मेदिनी । म्रदितुं शक्यतेऽकठिनत्वादिति मृदुः कोमलः ॥ 'भृगुः शुक्रे प्रपाते च जमदग्नौ पिनाकिनि' इति विश्वः ॥ लङ्घि— 'लघि लाघि गतौ', 'बहि महि वृद्धौ' ॥ लघुरिति । 'पृक्कायां स्त्री लघुः क्लीबं शीघ्रे कृष्णागुरुण्यपि' । इति त्रिकाण्डशेषः । 'लघुरगुरौ च मनोज्ञे निःसारे वाच्यवत् क्लीबम् । शीघ्रे कृष्णागुरुणि च पृक्कानामौषधौ स्त्रियाम्' इति मेदिनी ॥ नृपभेद इति । एतेन 'अवेक्ष्य धातोर्गमनार्थमर्थविचकार नाम्ना रघुमात्मसम्भवम्' इति कालिदासवचनं व्याख्यातम् ॥ बहुरिति । 'बहुस्त्र्यादिसंख्यासु विपुले त्वभिधेयवत्' इति मेदिनी ॥ ऊरुरिति । 'सक्थि क्लीबे पुमानूरुः' इत्यमरः । ऊर्णूयते आच्छाद्यते इत्यूरुः कर्मणि प्रत्ययः ॥ उरु महदिति । कर्त्तरि प्रत्ययः ॥ श्लिषेः— 'श्लिष आलिङ्गने' अस्मात्कुप्रत्ययः कश्चान्तादेशः ॥ उच्यत इति । स हि यावत्कार्यं श्लिष्यति लगति व्याप्रियत इति यावत् ॥ आङ्पर— 'खनु अवदारणे' 'शॄ हिंसायाम्' ॥ पर्शुरपीति । 'पर्शुः परशुना सह' इति विश्वः ॥ हरिमित— 'द्रु गतौ' अस्माद्धरिमितयोरुपपदयोः कुः स्यात्स च डित् ॥ हरिद्रुर्वृक्ष इति । दारुहरिद्रा इत्येके । शतद्रुर्नदीभेदः । 'शितद्रुस्तु शतद्रुः स्यात्' इत्यमरः ॥ तद्वानिति । द्रुभ्यां मः ॥ खरुशङ्कु— [illegible] चोदाहृतम् । किञ्चेदं

---

१—संप्रति भाष्ये 'स्थास्थिन्स्थूणाम्' इति पठ्यते । [illegible] भाष्यम न वार्तिकमिति चिन्त्यमेतत् इति शब्दरत्नम् ॥

ङ्गुलिगु ॥ पञ्चैते कुप्रत्ययान्ता निपात्यन्ते । खनते रेफश्चान्तादेशः । खरुः कामः क्रूरो मूर्खः अश्वश्च । शङ्कुर्ना कीलशल्ययोः । पिबतेरीत्त्वं युगागमश्च । पीयुर्वायसः कालः सुवर्णं च । निपूर्वाल्लगिगतावित्यस्मात्कुत्वं नेर्दीर्घश्च । नीलङ्गुः कृमिविशेषः । शृगालश्च । नीलाङ्गुरिति पाठान्तरम् तत्र धातोरपि दीर्घः । लगे सङ्गे । अस्य अतं इत्त्वं च लगतीति लिगु चित्तम् । लिगुर्मूर्खः ॥ (उ.) मृगय्वादयश्च ॥ एते कुप्रत्ययान्ता निपात्यन्ते । मृगं यातीति मृगयुर्व्याधः । देवयुर्धार्मिकः । मित्रयुर्लोकयात्राभिज्ञः । आकृतिगणोऽयम् ॥ (उ.) मन्दिवाशिमथिचतिचङ्क्यङ्किभ्य उरच् ॥ मन्दुरा वाजिशाला । वाशुरा रात्रिः । मथुरा । चतुरः । चङ्कुरो रथः । अङ्कुरः । खर्जूरादित्वादङ्कूरोऽपि ॥ (उ.) व्यथेः सम्प्रसारणं किच्च ॥ विथुरश्चोररक्षसोः ॥ (उ.) मकुरदर्दुरौ ॥ मकुरो दर्पणः । बाहुलकान्मुकुरोऽपि । दॄ विदारणे । धातोर्द्विर्वचनमभ्यासस्य रुक् टिलोपश्च । दर्दुरस्तोयदे भेके वाद्यभाण्डाद्रिभेदयोः। दर्दुरा चण्डिकायां स्याद् ग्रामजाले च दर्दुरमिति विश्वः ॥ (उ.) मद्गुरादयश्च ॥ उरजन्ता निपात्यन्ते । माद्यतेर्गुक् । मद्गुरो मत्स्यभेदः । कर्बृ वर्णे । रुगागमः । कर्बुरः श्वेतरक्षसोः । बध्नातेः खर्जूरादित्वादूरोऽपि । बन्धूरबन्धुरौ स्यातां नम्रसुन्दरयोस्त्रिषु इति रन्तिदेवः ॥ (उ.) कोकतेर्वा कुक् ॥ कुक्कुरः । कुकुरः ॥ (उ.) असेरुरन् ॥ असुरः॥ प्रज्ञाद्यण् । आसुरः ॥ (उ.) मसेश्च ॥ पञ्चमे पादे मसेरूरन्निति वक्ष्यते । मसूरा मसुरा व्रीहिप्रभेदे पण्ययोषिति । मसूरा मसुरा वा ना वेश्याव्रीहिप्रभेदयोः। मसूरी पापरोगे स्यादुपधाने पुनः पुमान् । मसूरमसुरौ च

---

' खनु अवदारणे ', ' शकि शङ्कायाम्' ॥ काम इत्यादि । खरुः पतिंवरा कन्येत्यपि वोध्यम्। ' खरुर्दर्पे हरे दन्ते दैत्ये श्वेते तु वाच्यवंत्' इति विश्वत्रिकाण्डशेषौ॥शङ्कतेऽस्मादिति शङ्कुः। 'शङ्कुः कीले गरे शस्त्रे संख्यापादपभेदयोः । यादोभेदे च पापे च स्थाणावपि च दृश्यते ' इति विश्वः ॥ पीयुरिति । ' पीयुः काले रवौ घोरे ' इति मेदिनी ॥ क्रिमिविशेष इति। ' नीलङ्गुः क्रिमिजातौ स्याद्भ्रम्भरालीप्रसूनयोः ' इति विश्वः । ' नीलङ्गुः स्यात्क्रमौ पुंसि भम्भराल्यान्तु योषिति ' इति मेदिनीकारः ॥ पाठान्तरमिति । ' नीलङ्गुरपि नीलाङ्गुः' इति विश्वः॥ धातोरपीति । केचित्तु–नीलशब्दे उपपदे गमेष्टिलोपः उपपदस्य मुम् दीर्घश्च पाक्षिको निपात्यते इत्याहुः । ' लिगु चित्ते नपुंसकम् ' इति वररुचिः ॥ मृगय्वादयश्च ॥ ' मृगयुः पुंसि गोमायौ व्याधे च परमेष्ठिनि ' इति मेदिनी । ' मृगयुर्ब्रह्मणि ख्यातो गोमायुव्याधयोरपि ' इति विश्वः ॥ ' देवयुर्वाच्यलिङ्गे स्याद्धार्मिके लोकयात्रिके ' इति मेदिनी ॥ आकृतिगण इति । तेन ' पील प्रतिष्टम्भे ' अस्मात्कुः ' पीलुर्गजे द्रुमे काण्डे परमाणुप्रसूनयोः ' इति विश्वः । भाट्टास्तु पीलुशब्दस्य वृक्षे आर्यप्रसिद्धिः, गजे तु म्लेच्छप्रसिद्धिरित्याश्रित्य व्यवजह्रुः ॥ ' पडि गतौ ' अस्मात्कुः धातोर्वृद्धिश्च पाण्डुः ॥ ' कडि मदे ' कण्डुरित्यादि वोध्यम् ॥ मन्दिवाशि–। ' मदि स्तुत्यादौ ', ' वाश्ट शब्दे ', ' मन्थ विलोडने ', ' चते याचने ', ' चङ्क ' इति सौत्रो धातुः, ' अकि लक्षणे ' ॥ वाशुरा रात्रिरिति । वाश्यन्तेऽस्यामिति विग्रहः ' वाशुरो गर्दभः ' इत्यन्ये । ' वाशुरा वाशितारात्र्योः ' इति मेदिनीहेमचन्द्रौ ॥ चङ्कुर इति। ' चङ्कुरः स्यन्दने वृक्षे ' इति मेदिनी ॥ ' अङ्कुरो रुधिरे लोम्नि पानीयेऽभिनवोद्भिदि ' इति च ॥ खर्जूरादित्वादिति । ऊरप्रत्ययोऽपीति भावः । ' अङ्कुरोऽङ्कूर एव च ' इति विश्वप्रकाशः ॥ व्यथेः–। 'व्यथ भयसंचलनयोः' अस्मादुरच् कित्स्याद्धातोः संप्रसारणञ्च । दशपाद्यां तु ' व्यथेः सम्प्रसारणं किच्च ' इति सूत्रं पठित्वा धकारमन्तादेशं विधाय–विधुरोऽनग्निक इत्युदाहृतम् । माधवप्रसादकारादिभिरिति तदेवानुसृतं, न त्वेतद्युक्तम्–' त्वमेषां विथुरा शवांसि ' ' अथ विद्धा विथुरेणाचिदस्रा ' इत्यादिमन्त्रेषु थकारपाठस्य निर्विवादत्वात् । यदपि माधवेनोक्तं ' विदि भिदिच्छिदि–' इत्यत्र ' व्यथेः सम्प्रसारणं च ' इति वचनात्कुरचि धान्तरूपमिति । तदपि स्थवीयः, कुरज्विधायके सूत्रे व्यथेरुपसंख्यानस्याप्रसिद्धत्वात् । तस्मादिह ' धः किच्च ' इति दशपादीपाठ उपेक्ष्य एव । कथं तर्हि ' विधुरः ' इति प्रयोगस्य निर्वाह इति चेत्। धुरो विगत इति प्रादिसमासेनेत्यवधेहि । ' समासान्ताः ' इति सूत्रे वृत्तिपदमञ्जर्योस्तथैवोक्तत्वात् । इह ' व्यथेः किच्च ' इत्येवास्तु ' ग्रहिज्या–' इत्यनेन सम्प्रसारणं स्यादेवेति न भ्रमितव्यम्, ग्रहिज्यादिषु व्यधिर्वगचतुर्थो, न त्वयमिति निष्कर्षात् ॥ मकुर इति । ' मकि मण्डने ' अस्मादुरच् नलोपश्च ॥ बाहुलकादिति । धातोरुपधायाः पक्षे उकार इति भावः । ' मकुरो मुकुरोऽपि च ' इति विश्वः । ' मकुरः स्यान्मुकुरवद्दर्पणे च कुलद्रुमे । कुलालदण्डे ' इति मेदिनी ॥ धातोर्द्विवचनमिति । केचित्तु गुणो दुगागमश्च निपात्यत इत्याहुः ॥ ग्रामजाले चेति । ' यामजाले च ' इति पाठान्तरम् ॥ मद्गुरादयश्च । ' मदी हर्षे ' ' कर्बुरं सलिले हेम्नि कर्बुरः पापरक्षसोः । कर्बुरा कृष्णवृन्तायां शवले पुनरन्यवद् ' इति मेदिनी ॥ बन्धूरबन्धुराविति । 'बन्ध बन्धने ' ॥ कुक्कुर इति । ' कुक्क आदाने ' ॥ कुक्कुरः कुकुरो मतः ' इति हट्टचन्द्रः । ' कुक्कुरः सारमेये ना ग्रन्थिपर्णे नपुंसकः ' इति मेदिनी । ' अत सातत्यगमने ' आदिदीर्घः । आतरः । ' वा गतिगन्धनयोः ' । गुगागमः । ' वागुरा मृगबन्धनी ' इत्यादिरपि ज्ञेयम् ॥ असेः—। ' असु क्षेपणे ' ॥ मसेश्च ॥ ' मसी परिणामे '। 'मसूरा मसुरा

द्वाविति विश्वः ॥ (उ) **शावशेराप्तौ** ॥ शु इति आश्चर्ये । श्वशुरः । पतिपत्न्योः प्रसूः श्वश्रूः श्वशुरस्तु पिता तयोरित्यमरः ॥ (उ) **अविमह्योष्टिषच्** ॥ अविषः । महिषः ॥ (उ) **अमेर्दीर्घश्च** ॥ आमिषं त्वस्त्रियां मांसे तथा स्याद्भोग्यवस्तुनि ॥ (उ) **रुहेर्वृद्धिश्च** ॥ रङ्कुशम्बररौहिषाः । रौहिषो मृगभेदे स्याद्रौहिषं च तृणं मतमिति संसारावर्तः ॥ (उ) **तवेर्णिद्वा** ॥ तवेति सौत्रो धातुः । तविषताविषावब्धौ स्वर्गे च । स्त्रियां तविषी नदी देवकन्या भूमिश्च । तविषी बलमिति वेदभाष्यम् ॥ (उ) **नञि व्यथेः** ॥ अव्यथिषोऽब्धिसूर्ययोः । अव्यथिषी धरारात्र्योः ॥ (उ) **किलेर्बुक् च** ॥ किल्बिषम् ॥ (उ) **इषिमदिमुदिखिदिच्छिदिभिदिमन्दिचन्दितिमिमिहिमुहमुचिरुचिरुधिबन्धिशुषिभ्यः किरच्** ॥ इषिरोऽग्निः । मदिरा सुरा । मुदिरः कामुकाभ्रयोरिति विश्वमेदिन्यौ । खिदिरश्चन्द्रः । छिदिरोऽसिकुठारयोः । भिदिरं वज्रम् । मन्दिरं गृहम् । स्त्रियामपि । मन्दिरं मन्दिरापि स्यादिति विश्वः । चन्दिरौ चन्द्रहस्तिनौ । तिमिरं तमोऽक्षिरोगश्च । मिहिरः सूर्यः । मुहिरः काम्यसभ्ययोः । मुचिरो दाता । रुचिरम् । रुधिरम् । बधिरः । शुष शोषणे । शुषिरं छिद्रम् । शुष्कमित्यन्ये ॥ (उ) **अशेर्णित्** ॥ आशिरो वह्निरक्षसोः ॥ (उ) **अजिरशिशिरशिथिलस्थिरस्फिरस्थविरखदिराः** ॥ अजेर्वीभावाभावः । अजिरमङ्गणम् । शशेरुपधाया इत्त्वम् । शिशिरं स्यादृतोर्भेदे तुषारे शीतलेऽन्यवत् । श्रथ मोचने उपधाया इत्त्वं रेफलोपः । प्रत्ययरेफस्य लत्वम् । शिथिलम् । स्थास्फायोष्टिलोपः । स्थिरं निश्चलम् । स्फिरं प्रभूतम् । तिष्ठतेर्वुग् ह्रस्वत्वं च । स्थविरः । खदिरः । बाहुलकात् शीङो वुग् ह्रस्वत्वं च । शिविरम् ॥ (उ) **सलिकल्यनिमहिभडिभण्डिशण्डिपिण्डितुण्डिकुकिभूभ्य इलच्** ॥ सलति गच्छति निम्नमिति सलिलम् । कलिलम् । अनिलः । महिला । पृषोदरादित्वान्महे-

---

वा ना वेश्यात्रीहिप्रभेदयोः । मसूरी पापरोगे स्यादुपधाने पुनः पुमान्' इति मेदिनी ॥ **शावशेः**—। शु इति कृताकारलोप आशुशब्दस्तस्मिन्नुपपदे आप्तौ गम्यमानायाम्—'अशू व्याप्तौ' इत्यस्माद्धातोरुरन्स्यात् । श्वशुरो दम्पत्योः पिता । 'पतिपत्न्योः प्रसूः श्वश्रूः, श्वशुरस्तु पिता तयोः' इत्यमरः ॥ **अवि**—। 'अव रक्षणादौ', 'मह पूजायाम्' ॥ **अविष इति** । राजा समुद्रश्च ॥ महिषो महान् । 'तुरीयं धाम महिषो विवक्ति उत माता महिषमन्ववेनत्' । टित्त्वान्ङीप् । महिषी राजपत्नी ॥ **रुहेः**—। 'रुह बीजजन्मनि प्रादुर्भावे च' '**रौहिषो** मृगभेदः स्याद्रौहिषञ्च तृणं मतम्' इति संसारावर्त्तः ॥ **वेदभाष्यमिति** । 'इन्द्रो वृत्रस्य तविषीम्', 'इन्द्रस्यात्र तविषीभ्यो विरप्शिन्' इत्यादिमन्त्रेष्विति भावः । वैदिकनिघण्टौ 'ओजः पाजः' इत्यादिषु बलनामसु तविषीशब्दस्य पाठश्चेह मूलमिति बोध्यम् । '**तविषः** शोभनाकारे मेलेऽब्धिव्यवसाययोः । **तविषी** देवकन्यायां पुंसि स्वर्गे महोदधौ' । '**ताविषी** चेन्द्रकन्यायां ना स्वर्गाम्बुधिकाञ्चने' इति मेदिनी ॥ **नञि व्यथेः** । 'व्यथ भयसंचलनयोः' ॥ **किलेः**—। 'किल श्वैत्यक्रीडनयोः' अस्मादिषच् धातोर्वुगागमश्च । '**किल्बिषं** पापरोगयोः । अपराधेऽपि' इति मेदिनी ॥ **इषिमदि**—। 'इषु इच्छायाम्', 'मदी हर्षे', 'खिद दैन्ये', 'छिदिर् द्वैधीकरणे', 'भिदिर् विदारणे', 'मदि स्तुत्यादौ', 'चदि आह्लादने', 'तिम आर्द्रीभावे', 'मिह सेचने', 'मुह वैचित्ये', 'मुच्लृ मोक्षणे', 'रुच दीप्तौ', 'रुधिर् आवरणे', 'बन्ध बन्धने', 'शुष शोषणे', **इषिरोऽग्निरिति** । आहार इत्यन्ये । '**छिदिरः** पावके रज्जौ करवाले परश्वधे' इति मेदिनी । '**मन्दिरं** नगरेऽगारे क्लीबं ना मकरालये' इति मेदिनी । '**चन्दिरोऽ**नेकपे चन्द्रे' इति च । '**तिमिरं** ध्वान्ते नेत्रामयान्तरे' इति । '**मिहिरः** सूर्यवृद्धयोः' इति मेदिनी । '**मुहिरः** कामिमूर्खयोः' इति च । 'सुन्दरं **रुचिरं** चारु' इत्यमरः । '**रुधिरोऽ**ङ्गारके पुंसि क्लीबं तु कुङ्कुमासृजोः' इति मेदिनी । बधिरः श्रोत्रेन्द्रियरहितः । '**शुषिरं** विवरं बिलम्' इत्यमरः ॥ **अशेः**—। 'अश भोजने' ॥ **अजिर**—। 'अज गतौ', 'शश प्लुतगतौ', 'ष्ठा गतिनिवृत्तौ', 'स्फायी वृद्धौ', 'खद हिंसायाम्' ॥ **अजिरमिति** । दशपादीवृत्तौ तु नञ्पूर्वस्य जीर्यतेर्ऋवर्णलोपो निपात्यते इत्युक्तम् । तदपि ग्राह्यम् । 'आशुद्रुतमजिरं प्रत्नमीड्यम्' इत्यादौ न जीर्यतीत्यजिर इत्यस्यानुगुणत्वात् ॥ **अङ्गणमिति** । अञ्जेर्ल्युटि अनादेशः । नकारस्य बाहुलकात् णत्वमित्येके । अन्ये तु दन्त्यमेवेच्छन्ति । '**अजिरं** प्राङ्गणे काये विषये दर्दुरेऽनिले' इति मेदिनी । '**शिशिरो** ना हिमे न स्त्री त्वृतुभेदे जडे त्रिषु' इति च । विश्वकोशस्थमाह—**शिशिरं स्यादिति** ॥ **खदिरो** वृक्षभेदः । '**खदिरी** शाकभेदे स्त्री ना चन्द्रे दन्तधावने' इति मेदिनी ॥ **शिबिरमिति** । शेरतेऽस्मिन् राजबलानि, 'निवेशः **शिबिरं** शण्ढे' इत्यमरः ॥ **सलिकलि**—। 'षल गतौ', 'कल संख्याने', 'अन प्राणने', 'मह पूजायाम्', 'भडि परिभाषणे', 'भडि कल्याणे', 'शडि रुजायाम्', 'पिडि संघाते', 'तुडि तोडने', 'कुक आदाने', 'भू सत्तायाम्', 'कुट कौटिल्ये' ॥ **कलिल इति** । मिश्रो गहनश्च । 'कलिलं गहनं समे' इत्यमरः ॥ **महिलेति** । '**महिला** फलिनीस्त्रियोः' इति मेदिनी । 'प्रियङ्गुः फलिनी फली' इत्यमरः ॥ **पृषोदरेति** । तथा च दमयन्तीकाव्ये प्रयोगः—'परम-

ॐ वृधिवपिभ्यां रन् ॥ वर्ध्रं चर्म । वप्रः प्राकारः ॥ ॐ ऋज्रेन्द्राग्रवज्रविप्रकुब्रचुब्रक्षुरखुरभद्रोग्रभेरभेलशुक्रशुक्लगौरवत्रेरामालाः ॥ रन्नन्ता ऊनविंशतिः । निपातनाद् गुणाभावः । ऋज्रो नायकः । इदि–इन्द्रः । अङ्गेर्नलोपः । अग्रम् । वज्रोऽस्त्रीहीरके पवौ । डुवप् उपधाया इत्त्वम् । विप्रः । कुम्बिचुम्ब्योर्नलोपश्च । कुब्रमरण्यम् । चुब्रं मुखम् । क्षुर विलेखने । रेफलोपः । अगुणः । क्षुरः । खुर छेदने । रलोपो गुणाभावश्च । खुरः । भन्देर्नलोपः । भद्रम् । उच समवाये । चस्य गः । उग्रः । ञिभी–। भेरी । पक्षे लः । भेलो जलतरणद्रव्यम् । शुचेश्चस्य कः । शुक्रः । पक्षे लः । शुक्लः । गुङ् वृद्धिः । गौरोऽरुणे सिते पीते । वन संभक्तौ । वत्रो विभागी । इणो गुणाभावः । इरा मद्ये च वारिणि । मा माने । माला ॥ ॐ समि कस उकन् ॥ कस गतौ । सम्यक्कसन्ति पलायन्ते जना अस्मादिति सङ्कसुको दुर्जनः, अस्थिरश्च ॥ ॐ पचिनशोर्णुकन् कनुमौ च ॥ पचेः कः । पाकुकः सूपकारः । नशेर्नुम् । नंशुकः ॥ ॐ भियः क्रुकन् ॥ भीरुकः ॥ ॐ क्वुन् शिल्पिसंज्ञयोरपूर्वस्यापि ॥ रजकः । इक्षुकुट्टकः । चरकः । चष भक्षणे । चषकः । शुनकः । भषकः ॥ ॐ रमे रश्च लो वा ॥ रमको विलासी । लमकः ॥ ॐ जहातेर्द्वे च ॥ जहकस्त्यागी कालश्च ॥ ॐ ध्मो धम च ॥ धमकः कर्मकारः ॥ ॐ हनो वध च ॥

---

वृधि—। 'वृधु वृद्धौ', 'डुवप् बीजसन्ताने'। 'वप्रः पितरि केदारे वप्रः प्राकाररोधसोः'। इति धरणिरन्तिदेवौ। 'वप्रस्ताते पुमानस्त्री वेणुक्षेत्रचये तटे' इति मेदिनी ॥ ऋज्रेन्द्राग्र—। 'ऋजु गतिस्थानादिषु', 'इदि परमैश्वर्ये', 'अगि गतौ', 'वज गतौ', 'डुवप् बीजसन्ताने', 'कुबि आच्छादने', 'चुबि वक्त्रसंयोगे', 'भदि कल्याणे', 'शुच शोके', 'गुङ् अव्यक्ते शब्दे', 'इण् गतौ' ॥ नायक इति। 'ऋज्राश्वः पृष्टिभिरम्बरीषः' इति मन्त्रे 'ऋज्रा गतिमन्तोऽश्वा यस्य स ऋज्राश्वः' इति वेदभाष्यम्। 'इन्द्रः शचीपतावन्तरात्मन्यादित्ययोगयोः' इति विश्वः। 'अग्रं पुरस्तादुपरि परिमाणे पलस्य च॥ आलम्बने समूहे च प्रान्ते स्यात्पुनपुंसकम् ॥ अधिके च प्रधाने च प्रथमे चाभिधेयवत्।' इति मेदिनी। क्षुरो लोमच्छेदकः। 'क्षुरः स्याच्छेदनद्रव्ये कोकिलाक्षे च गोक्षुरे' विश्वमेदिन्यौ। 'खुरः कोलदले शफे' इति मेदिनी। भद्रः शिवे खञ्जरीटे वृषमेरुकदम्बके। करिजाति विशेषे ना क्लीबं मङ्गलमुस्तयोः' इति च। 'उग्रः शूद्रासुते क्षत्त्राद्रुद्रे पुंसि त्रिषूत्कटे। स्त्री वचाक्षुद्रयोः' इति मेदिनी ॥ भेरीति। गौरादित्वान्ङीष्। 'भेरी स्त्री दुन्दुभिः पुमान्' इत्यमरः। 'भेलः प्लवे भीलुके च निर्बुद्धिमुनिभेदयोः' इति विश्वः। 'भेलः प्लवे मणौ पुंसि भीरावज्ञे च वाच्यवत्' इति। 'शुक्रः स्याद्भार्गवे ज्येष्ठमासे वैश्वानरे पुमान्। रेतोऽक्षिरुग्भिदोः क्लीबम्, शुक्लो योगान्तरे सिते। नपुंसकं तु रजते' इति च। 'गौरः पीतेऽरुणे श्वेते विशुद्धेप्यभिधेयवत्। ना श्वेतसर्षपे चन्द्रे न द्वयोः पद्मकेसरे। गौरी त्वसंजातरजःकन्याशंकरभार्ययोः। रोचने रजनीपिङ्गाप्रियङ्गुवसुधासु च। आपगाया विशेषेऽपि यादसांपतियोषिति' इति च मेदिनी। 'नदीभेदे च गौरी स्याद् वरुणस्य च योषिति' इति विश्वः। 'अष्टवर्षा तु या दत्ता श्रुतशीलसमन्विते। सा गौरी तत्सुतो यस्तु स गौरः परिकीर्तितः' इति ब्रह्माण्डपुराणे। एतेन 'गौरः शुच्याचारः' इत्यादि भाष्यं व्याख्यातम्। 'इरा भूवाक्सुराप्सु स्यात्' इत्यमरः ॥ मालेति। प्रत्ययरेफस्य लत्वम्। 'मालं क्षेत्रे स्त्रियां पङ्कासजोर्जात्यन्तरे पुमान्' इति मेदिनी। 'मालं क्षेत्रेऽजिने मालो माला पुष्पादिदामनि' इति विश्वः। 'मालमुन्नतभूतलम्' इत्युत्पलः। 'क्षेत्रमारुह्य मालम्' इति मेघदूतः। मणिपूर्वोऽयमर्थान्तरे रूढः। 'मणिमाला स्मृता हारे स्त्रीणां दन्तक्षतान्तरे' इति विश्वः ॥ समि कस—॥ 'संकसुकोऽस्थिरः' इति विशेष्यनिघ्नेऽमरः ॥ पचिनशोः—। 'डुपचष् पाके', 'णश अदर्शने' आभ्यां णुकन् प्रत्ययः स्यात्। णकारो वृद्ध्यर्थः। अनयोर्यथाक्रमं कादेशनुमागमौ च भवतः ॥ भियः। 'ञिभी भये' अधीरेकातरस्त्रस्ते भीरुभीरुकभीलुकाः' इत्यमरः ॥ क्वुन्—। शिल्पिन्यभिधेये संज्ञायां गम्यमानायां च क्वुन् स्यादपूर्वस्य निरुपपदस्य च। अपिशब्दात्सोपपदस्य पञ्चम्यर्थे षष्ठी। यद्वा—अर्थद्वारकसंबन्धे षष्ठी, प्रकृतिप्रत्ययार्थयोः क्रियाकारकभावात्। एवं च निरुपपदप्रकृत्यर्थनिरूपितकर्तृकारके क्वुन्नित्याद्यर्थः फलितः। शिल्पिनि तावत्– 'रञ्ज रागे' 'रजकौ धावकशुकौ' इति विश्वः। 'रजकौ धावकशुकौ' इति हेमचन्द्रः। 'कुट्ट छेदने' इक्षून् कुट्टयति गोलिकः। 'चर गतिभक्षणयोः' संज्ञायां तु 'चषकोऽस्त्री पानपात्रम्'। 'शुन गतौ', 'भष भर्त्सने' शुनकः भषकः श्वा॥ लमक इति। ऋषिविशेषः॥ जहातेः—। 'ओहाक् त्यागे'॥ ध्मो धम च।

वधकः । बहुलमन्यत्रापि । कुह विस्मापने । कुहकः । कृतकम् ॥ **कृषेर्वृद्धिश्चोदीचाम्** ॥ कार्षकः । कृषकः ॥ **उदकं च** ॥ प्रपञ्चार्थम् ॥ **वृश्चिकृष्योः किकन्** ॥ वृश्चिकः । कृषिकः ॥ **प्राङि पणिकषः** ॥ प्रापणिकः पण्यविक्रयी । प्राकषिकः परदारोपजीवी ॥ **मुषेर्दीर्घश्च** ॥ मूषिक आखुः ॥ **स्यमेः सम्प्रसारणं च** ॥ चाद्दीर्घः । सीमिको वृक्षभेदः ॥ **क्रिय इकन्** ॥ क्रयिकः क्रेता ॥ **आङि पणिपनिपतिखनिभ्यः** ॥ आपणिकः । आपनिक इन्द्रनीलः किरातश्च । आपतिकः श्येनो दैवायत्तश्च । आखनिको मूषको वराहश्च ॥ **श्यास्त्याहृञविभ्य इनच्** ॥ श्येनः । स्त्येनः । हरिणः । अविनोऽध्वर्युः ॥ **वृजेः किच्च** ॥ वृजिनम् ॥ **अजेरज च** ॥ वीभावबाधनार्थम् अजिनम् ॥ **बहुलमन्यत्रापि** ॥ कठिनम् । नलिनम् । मलिनम् । कुण्डिनम् ॥ द्यतेः—यत्परुषि दिनम् । दिवसोऽपि दिनम् ॥ **द्रुदक्षिभ्यामिनन्** ॥ द्रविणम् । दक्षिणः । दक्षिणा ॥ **अर्तेः किदिच्च** ॥ इरणं शून्यम् ॥ **वेपितुह्योर्ह्रस्वश्च** । विपिनम् । तुहिनम् ॥ **तलिपुलिभ्यां च** ॥ तलिनं विरले स्तोके स्वच्छेऽपि तलिनं त्रिषु । पुलिनम् ॥ **गर्वेरत उच्च** ॥ गौरादित्वात् ङीष् ॥ गुर्विणी गर्भिणी ॥ **रुहेश्च** ॥ रोहिणः ॥ **महेरिनण् च** ॥ चादिनन् । माहिनम्, महिनं राज्यम् ॥ **क्विब्वचिप्रच्छिश्रिस्रुद्रुप्रुज्वां दीर्घोऽसम्प्रसारणं च** ॥ वाक् । प्राट् । श्रीः । स्रवत्यतो घृतादिकमिति स्रूर्यज्ञोपकरणम् । द्रूर्हिरण्यम् । कटप्रूः कामरूपी कीटश्च । जूराकाशे सरस्वत्यां

---

'ध्मा शब्दाग्निसंयोगयोः' ॥ **कुहको** दाम्भिकः ॥ **कृतकमिति** । 'कृती छेदने' ॥ **कृषेः**—। 'कृष विलेखने' अस्मात्क्वुन् । कार्षकः कृषीवलः कृषकः स एव । '**कृषकः** पुंसि फाले स्यात्कार्षके त्वभिधेयवत्' इति मेदिनी ॥ **उदकं च** । 'उन्दी क्लेदने' अस्मात्क्वुन् । ननु 'क्वुन् शिल्पि–' इत्यादिना गतार्थमित्याशङ्कायामाह–**प्रपञ्चार्थमिति** ॥ **वृश्चिकृष्योः**—। 'ओव्रश्चू छेदने' 'कृष विलेखने' ॥ **प्राङि**—। 'पण व्यवहारे' 'कषशिष–' इति दण्डके हिंसार्थकः ॥ **मुषेः**—। 'मुष स्तेये' अस्मात्किकन् धातोर्दीर्घश्च ॥ **स्यमेः**—। 'स्यमु शब्दे' ॥ **क्रियः**—। 'डुक्रीञ् द्रव्यविनिमये' ॥ **आङि पणि**—। 'पण व्यवहारे स्तुतौ च' 'पन च', 'पत्लृ गतौ', 'खनु अवदारणे' एभ्य आङि उपपदे इकन् स्यात् ॥ **आपणिक इति** । नन्वत्रैव प्रपूर्वे आङि प्रापणिक इति सिद्धौ 'आङि पणि–' इत्यत्र पणिग्रहणं प्रपञ्चार्थमित्युज्ज्वलदत्तः । उपसर्गान्तरनिवृत्त्यर्थं तु मनोरमायाम् । आपणिकशब्दोऽयं नित्स्वरेणाद्युदात्तः । आपणेन व्यवहरतीत्यर्थे ठकि तु 'कितः' इत्यन्तोदात्तः ॥ **श्यास्त्या**—। 'श्यैङ् गतौ', 'स्त्यै ष्ट्यै शब्दसंघातयोः', 'हृञ् हरणे', 'अव रक्षणादौ' । '**श्येनः** पत्त्रिणि पाण्डुरे' इति मेदिनी । स्तेनश्चौरः 'स्तेन चौर्ये' इति चौरादिकात्पचाद्यचि तु स्तेन इति निर्यकारोऽपि । केचित्तु 'स्तायूनां पतये नमः' इत्यादिप्रयोगोपष्टम्भेन निर्यकारस्यापि ष्ट्यैधातोर्माधवादिभिर्वादिषु स्वीकृतत्वात्प्रकृतसूत्रेऽपि ष्ट्यैधातुमेव पठन्तः स्तेनशब्दो निर्यकार एवेत्याहुः । '**हरिणः** पुंसि सारङ्गे विशदे त्वभिधेयवत् । **हरिणी** हरितायां च नारीभिद्वृत्तभेदयोः । सुवर्णप्रतिमायां च' इति मेदिनी ॥ **वृजेः**—। 'वृजी वर्जने' । वृजिनं पापम् । '**वृजिनं** कल्मषे क्लीबं केशे ना कुटिलेऽन्यवत्' इति मेदिनी ॥ **अजेः**—। 'अज गतिक्षेपणयोः' अस्मादिनच् ॥ अजेरजादेशविधानं व्यर्थमित्यत आह–**वीभावबाधनार्थमिति** । '**अजिनं** चर्म कृत्तिः स्त्री' इत्यमरः ॥ **बहुलमन्यत्रापि** । अन्यस्मादपीत्यर्थः । 'कठ कृच्छ्रजीवने', 'णल गहने', 'मल मल्ल धारणे', 'कुडि दाहे' 'दो अवखण्डने' । '**कठिनमपि** निष्ठुरे स्यात् स्तब्धे तु त्रिषु नपुंसकं स्थाल्याम् । **कठिनी** खटिकायामपि **कठिना** गुडशर्करायां च' इति मेदिनी । '**मलिनं** दूषिते कृष्णे, ऋतुमत्यां तु योषिति' इति मेदिनी ॥ **कुण्डिनमिति** । 'नगरं कुण्डिनमण्डजो ययौ' इति श्रीहर्षः । कुण्डिन ऋषिः । तस्यापत्यं कौण्डिन्यः ॥ **यत्परुषीति** । यत्परुषि पर्वणि दिनं खण्डितं तद्देवानामिति तैत्तिरीयश्रुत्यर्थः ॥ **द्रुदक्षि**—। 'द्रु गतौ,' 'दक्ष वृद्धौ' । '**द्रविणं** न द्वयोर्वित्ते काञ्चने च पराक्रमे' इति मेदिनी । '**दक्षिणो** दक्षिणोद्भूतसरलच्छन्दवृत्तिषु । अवामे त्रिषु यज्ञादिविभिदाने दिशि स्त्रियाम्' इति च । '**दक्षिणः** सरलेदारपरच्छन्दानुवृत्तिषु । वाच्यवद्दक्षिणावाचि यज्ञदानप्रतिष्ठयोः' इति विश्वः ॥ **अर्तेः**—। 'ऋ गतौ' अस्मादिनन् किस्स्याद् इकारश्च धातो रपरत्वम् । '**इरिणं** शून्यमूषरम्' इत्यमरः । '**इरिणं** तूषरे, शून्येऽपि' इति मेदिनी ॥ **वेपि**—। 'टुवेपृ कम्पने', 'तुहिर् अर्दने' । आभ्यामिनन् ह्रस्वश्च धातोः । 'अटव्यरण्यं **विपिनम्**' इत्यमरः ॥ **तुहिनमिति** । लघूपधगुणे कृते ह्रस्वः ॥ **तलि**—। 'तल प्रतिष्ठायाम्', 'पुल महत्त्वे' ॥ **गर्वेः**—। 'गर्व मोचने' अस्मादिनन्, अकारस्य उत् ॥ **रुहेश्च** । 'रुह बीजजन्मनि प्रादुर्भावे च' ॥ **रोहिण इति** । प्रज्ञादित्वादणि रौहिणश्चन्दनतरुः ॥ **महे**—। 'मह पूजायाम्' । 'कुतस्त्वमिन्द्रमाहिनः सन्' इति मन्त्रे 'माहिनो महनीयः पूजनीयः' इति वेदभाष्यम् ॥ **क्विब्वचि**—। 'वच परिभाषणे', 'प्रच्छ ज्ञीप्सायाम्', 'श्रिञ् सेवायाम्', 'स्रु गतौ', 'द्रु गतौ', 'प्रुङ् गतौ', 'जु गतौ', चौरा ... **वागिति** । ... इति सम्प्रसारणाभावः पृच्छतीति प्राट् । 'प्रहिज्या–' इति सम्प्रसारणाभावः । 'च्छ्वोः शूट्' इति शः, 'व्रश्च–' इति षत्वं जश्त्वचर्त्वे । प्राशौ । प्राशः ॥ **श्रीरिति** । 'कृदिकारात्'

पिशाच्यां जवने स्त्रियाम् ॥ ⚙ आप्नोतेर्ह्रस्वश्च ॥ आपः । अपः । अद्भिः । अब्भ्यः ॥ ⚙ परौ व्रजेः षश्च पदान्ते ॥ व्रजेः क्विब्दीर्घौ स्तः पदान्ते तु षश्च । परिव्राट् । परिव्राजौ ॥ ⚙ हुवः श्लुवच्च ॥ जुहूः ॥ ⚙ स्रुवः कः ॥ स्रुवः ॥ ⚙ चिक् च ॥ इकार उच्चारणार्थः । क इत्, कुत्वम् । स्रुक् । स्रुचं च स्रुचश्च संमृड्ढि ॥ ⚙ तनोतेरनश्च वः ॥ तनोतेश्चिक् प्रत्ययः । अनो वशब्दादेशश्च । त्वक् ॥ ⚙ ग्लानुदिभ्यां डौः ॥ ग्लौः । नौः ॥ ⚙ च्विरव्ययम् ॥ डौरित्येव । ग्लौकरोति । कृन्मेजन्त इति सिद्धे नियमार्थमिदम् । उणादिप्रत्ययान्तश्च्व्यन्त एवेति ॥ ⚙ रातेर्डैः ॥ राः । रायौ । रायः ॥ ⚙ गमेर्डोः ॥ गौर्नादित्ये बलीवर्दे किरणक्रतुभेदयोः । स्त्री तु स्यादिशि भारत्यां भूमौ च सुरभावपि ॥ नृस्त्रियोः स्वर्गवज्राम्बुरश्मिदृग्वाणलोमसु ॥ बाहुलकाद् द्युतेरपि, डोः । द्यौः स्त्री स्वर्गान्तरिक्षयोः ॥ ⚙ भ्रमेश्च डूः ॥ भ्रूः । चाद्गमेः । अग्रेगूः ॥ ⚙ दमेर्डोसिः ॥ दोः । दोषौ ॥ ⚙ पणेरिज्यादेश्च वः ॥ वणिक् । स्वार्थेऽण् । नैगमो वाणिजो वणिक् ॥ ⚙ वशेः कित् ॥ उशिगग्नौ घृतेऽपि च ॥ ⚙ भृञ ऊच्च । भूरिक् भूमिः ॥ ⚙ जसिसहोरुरिन् ॥ जसुरिर्वज्रम् । सहुरिरादित्यः पृथिवी च ॥ ⚙ सुयुरुवृञो युच् ॥ सवनश्चन्द्रमा । यवनः । रवणः कोकिलः । वरणः ॥ ⚙ अशेरश च ॥ अश्नोतेर्युच् स्यात् रशादे-

---

इति ङीष् न भवति कृत्प्रत्ययस्य य इकार इति व्याख्यानात् । कृदन्तं यदिकारान्तमिति पक्षे तु यद्यपि ङीष्प्राप्तिरस्ति, तथापि कारग्रहणसामर्थ्येन केवलस्यैकारस्य ग्रहणादिकारान्तपक्षे दुर्बल इत्याहुः । दुर्घटस्तु—ङीपि श्रीमित्यपि रक्षित इच्छतीत्याह। 'श्री वेषरचनाशोभाभारतीसरलद्रुमे।लक्ष्म्यां त्रिवर्गसंपत्तिविधोपकरणेषु च।विभूतौ च मतौ च स्त्री' इति मेदिनी।'जूराकाशे—' इत्यादिमूलोदाहृतमपि मेदिनी ॥ आप्नोतेः—। 'आप्लृ व्याप्तौ' अस्मात्क्विप् धातोर्ह्रस्वश्च । 'आपस्त्री भूम्नि वार्वारि' इत्यमरः ॥ परौ—।'व्रज गतौ' ॥ हुवः—। 'हु दानादनयोः' अस्मात्क्विप् धातोश्च दीर्घः । श्लुवद्भावाद् द्विर्वचनम् ॥ स्रुवः कः । 'स्रु गतौ' । स्रुवो यज्ञपात्रविशेषः । 'अयं स्रुवोऽभिजिहर्ति, स्रुवेण पार्वणौ जुहोति' इत्यादौ प्रसिद्धः ॥ चिक्च—। स्रुव इत्येव॥ योगविभाग उत्तरार्थः ॥ क इदिति । तेन स्रुक् स्रुचौ स्रुच इत्यादौ गुणो न ॥ तनोते—।'तनु विस्तारे' व इति संघातग्रहणं तदाह—शब्दादेश इति । 'स्त्रियां तु त्वगसृग्धरा' इत्यमरः ॥ ग्लानुदि—। 'ग्लै हर्षक्षये' 'णुद प्रेरणे' । 'ग्लौर्मृगाङ्कः कलानिधिः' इत्यमरः । 'स्त्रियां नौस्तरणिस्तरीः' इति च ॥ ग्लौकरोतीति । अग्लौः ग्लौः संपद्यते तथा करोतीत्यर्थः । अव्ययत्वात्सुपो लुक् ॥ च्व्यन्त एवेति । तेन ग्लौर्नौर्गौरित्यादीनां नाव्ययत्वमिति भावः ॥ रातेः—। 'रा दाने'॥रा इति । 'रायो हलि' इत्यात्त्वम् । 'रः स्मृतः पावके तीक्ष्णे राः पुंसि स्वर्णवित्तयोः' इति मेदिनी । 'रस्तीक्ष्णे दहने रास्तु सुवर्णे जलदे धने' इति हेमचन्द्रः ॥ गमेः—। 'गम्लृ गतौ' । 'गोतो णित्' गौः ॥ केशवोक्तमाह—गौर्नादित्य इत्यादि । 'गौः स्वर्गे वृषभे रश्मौ वज्रे चन्द्रे पुमान् भवेत् । अर्जुने नेत्रदिग्बाणभूवाग्वारिषु गौर्मता' इत्यमरः ॥ द्युतेरपीति । 'द्युत दीप्तौ' द्योतन्ते देवा अस्यामिति द्यौः ॥ भ्रमेश्च—। 'भ्रमु अनवस्थाने' । 'गम्लृ गतौ' अग्रेगूः सेवकः ॥ दमेः—। 'दमु उपशमे' डित्त्वाट्टिलोपः । दोः । 'दोषं तस्य' इति श्रीहर्षप्रयोगात्पुंस्त्वम् । 'ककुद्दोषणी' इति भाष्यप्रयोगान्नपुंसकत्वम् । 'दोर्दोषा च भुजो बाहुः' इति धनञ्जयकोशात्स्त्रीलिङ्गोऽप्ययमित्यादि प्रागेव प्रपञ्चितम् ॥ पणेः—। 'पण व्यवहारे स्तुतौ च ।' अमरकोशमाह—नैगम इत्यादि । वशेः—। 'वश कान्तौ' अस्मादिजिः कित्स्यात् । 'ग्रहिज्या—' इति संप्रसारणम् ॥ भृञः—। 'भृञ् भरणे' अस्मादिजिः कित्स्यात् धातोरूकारान्तादेशश्च ॥ जसि—। 'जसु मोक्षणे' । 'जसुरये स्तर्यं पिप्युर्गाम्' इति मन्त्रे जसुरये श्रान्तायेति, 'नीचायमानं जसुरिं न श्येनम्' इत्यत्र जसुरिं क्षुधितं श्येनं न श्येनपक्षिणमिवेति, 'उतस्य वाजी सहुरिर्ऋतौ' इति मन्त्रे सहुरिः सहनशील इति च वेदभाष्यम् ॥ सुयु—। 'षुञ् अभिषवे', 'यु मिश्रणे', 'रु शब्दे', 'वृञ् वरणे' । सवनं त्वध्वरे स्नाने सोमनिर्दलनेऽपि च' इति मेदिनी । यवनो म्लेच्छविशेषः ॥ 'रवणः शब्दने स्वरे' इति च मेदिनी । रवणः कोकिल इत्येके । वरणो वृक्षभेदः । टापि तु वरणा नदी । 'वरणस्तिक्तशाकेऽपि प्राकारे वरणं वृतौ' इति विश्वः । 'वरुणो वरणः सेतुस्तिक्तशाकः कुमारकः' इत्यमरः ॥ अशेः—। 'अश

---

१—कारग्रहणस्य 'वर्णात्कारः' इत्युक्तेर्वर्णसमानार्थकत्वस्य 'तयेकारोकारौ, ऋकारस्त्रिंशतः' इत्यत्र मूल एवाङ्गीकरणेन तपरसमानार्थकत्वस्य ह्रस्वस्यैव बोधकत्वं मन्यमानास्तु प्राञ्चा एवेति बोध्यम् । अत एव 'तां दृष्ट्वा श्रीमिवायतीम्' 'कन्थामिव श्रीमपि कुत्सयन्तः' इत्यादिप्रयोगा ङीपि साधवः इति दिक् ।

शश्च। रशना काञ्ची। जिह्वावाची तु दन्त्यसकारवान्॥ (उ) **उन्देर्नलोपश्च**॥ ओदनः॥ (उ) **गमेर्गश्च**॥ गमेर्युच् स्याद्गश्चादेशः। गगनम्॥ (उ) **बहुलमन्यत्रापि**॥ युच् स्यात्। स्यन्दनः। रोचना॥ (उ) **रञ्जेः क्युन्**॥ रजनम्॥ (उ) **भूसूधूभ्रस्जिभ्यश्छन्दसि**॥ भुवनम्। सुवन आदित्यः। धुवनो वह्निः। निधुवनं सुरतम्। भृज्जनमम्बरीषम्॥ (उ) **कॄपॄवृजिमन्दिनिधाञः क्युः**॥ किरणः। पुरणः समुद्रः। वृजनमन्तरिक्षम्। मन्दनं स्तोत्रम्। निधनम्॥ (उ) **धृषेर्धिषच्च संज्ञायाम्**॥ धिषणो गुरुः। धिषणा धीः॥ (उ) **वर्तमाने पृषद्बृहन्महज्जगच्छतृवच्च**॥ अतिप्रत्ययान्ता निपात्यन्ते। पृषु सेचने। गुणाभावः। पृषन्ति। बृहत्। महान्। गमेर्जगादेशः।

---

व्याप्तौ'॥ **जिह्वावाची त्विति**। 'रस आस्वादने' चौरादिकः। ततो नन्द्यादित्वात् ल्युः। 'ण्यासश्रन्थ—' इति युज्वा। रसयत्यास्वादतीति रसना। '**रसनं** स्वदने ध्वनौ। जिह्वायां तु न पुंसि स्याद्रास्नायां **रसना** स्त्रियाम्' इति मेदिनी। काञ्चीवाची तालव्यशकारवान् जिह्वावाची दन्त्यसकारवानित्येषा व्यवस्था भूरिप्रयोगाभिप्रायेणोक्ता। वस्तुतस्तु तालव्यशकारवान् रशनाशब्दोऽपि काञ्च्यां जिह्वायां च, तथा दन्त्यसकारवान् रसनाशब्दोप्यर्थद्वये बोध्यः। तथा हि-'तालव्या अपि दन्त्याश्च शम्बशूकरपांशवः। **रशना**पि च जिह्वायाम्' इति विश्वकोशाज्जिह्वायामुभयं साधु। '**रसनं** निःस्वने स्वादे **रसना** काञ्चिजिह्वयोः' इत्यजयधरणिकोशाभ्यां काञ्च्यामप्युभयं साधु। एवं च 'अशेरश च' इति सूत्रे 'अशू व्याप्तौ' 'अश भोजने' इति धातुद्वयमपि ग्राह्यम्। 'रस आस्वादने' 'रस शब्दे' इति धातुभ्यां तु 'बहुलमन्यत्रापि' इत्यनुपदमेव वक्ष्यमाणेन युच्। तेन सर्वत्रावयवार्थानुगमोऽपि सूपपाद इत्याहुः॥ **उन्देः**—। 'उन्दी क्लेदने' अस्माद्युच्। '**ओदनं** न स्त्रियां भक्ते बलायामोदने स्त्रियाम्' इति मेदिनी॥ **गमेः**—। 'गम्लृ गतौ'। 'नभोऽन्तरिक्षं **गगनम्**' इत्यमरः॥ **बहुलम्**—। 'स्यन्दू प्रस्रवणे', 'रुच दीप्तौ'। '**स्यन्दनं** तु स्रुतौ नीरेऽतिनिशे ना रथे स्त्रियाम्' इति मेदिनी। '**रोचना** रक्तकह्लारे गोपित्तवरयोषितोः'। '**रोचनः** कूटशाल्मल्यां पुंसि स्याद्रोचके त्रिषु' इति च॥ 'चदि आह्लादे'। '**चन्दनं** मलयोद्भवे। **चन्दनः** कपिभेदे स्यान्नदीभेदे तु **चन्दनी**' इति विश्वः। '**चन्दनी** तु नदीभिदि। **चन्दनोऽ**स्त्री मलयजे भद्रकाल्यां नपुंसकम्' इति मेदिनी। भद्रकाली ओषधिविशेषः। 'भद्रकाली तु गन्धोल्यां कात्यायन्यामपि स्त्रियाम्' इति मेदिनी। 'असु क्षेपणे'। '**असनं** क्षेपणे क्लीबे पुंसि स्याज्जीवकद्रुमे' इति मेदिनी। 'अत सातत्यगमने' राजपूर्वः। '**राजातनः** क्षीरिकायां प्रियाले किंशुकेऽपि च' इति विश्वमेदिन्यौ। एवमन्येऽपि द्रष्टव्याः॥ **रञ्जेः**—। 'रञ्ज रागे'। ल्युटि तु रञ्जनम्। '**रजनो** रागजनने **रजनं** रक्तचन्दने' इति मेदिनी। बाहुलकात्कृपेरपि क्युन्। 'कृपो रो लः' इति प्राप्तलत्वाभावश्च। कृपणः॥ **भूसू**—। 'भू सत्तायाम्', 'षूङ् प्राणिप्रसवे', 'धूञ् कम्पने', 'भ्रस्ज पाके'। बहुलवचनाद्भाषायामपि क्वचित्। '**भुवनं** विष्टपे तु स्यात्सलिले गगने जने' इति मेदिनी। '**विष्टपं** भुवनं जगत्' इत्यमरः॥ **भृज्जनमिति**। 'ग्रहिज्या' इति सम्प्रसारणम्। सस्य जश्त्वेन दः, दस्य श्चुत्वेन जः' 'क्लीबेऽम्बरीषं भ्राष्ट्रो ना' इत्यमरः॥ **कॄपॄ**—। 'कॄ विक्षेपे', 'पॄ पालनादौ', 'वृजी वर्जने', 'मदि स्तुत्यादौ', 'डुधाञ् धारणपोषणयोः'। '**निधनं** स्यात्कुले नाशे' इति मेदिनी। '**निधनं** कुलनाशयोः' इति हेमचन्द्रः॥ **धृषेः**—'ञिधृषा प्रागल्भ्ये' अस्मात्क्युः धिषादेशश्च धातोः। '**धिषण**स्त्रिदशाचार्ये **धिषणा** धियि योषिति' इति मेदिनी। 'गीष्पतिर्**धिषणो** गुरुः' इत्यमरः॥ **वर्तमाने**—। **शतृवच्चेति**। तथा च 'उगिदचाम्—' इति नुमि, महान्। स्त्रियां तु 'उगितश्च' इति ङीपि महतीत्यादि सिध्यतीति भावः। ननु पृषन्महदादयः 'लटः शतृशानचौ—' इति शतृप्रत्ययान्ता एव भवन्तु, ततश्च वर्तमान इति, शतृवच्चेति, न कर्तव्यमिति महदेव लाघवमिति चेत्। अत्राहुः—शतृप्रत्ययान्तत्वे तु 'कर्तरि शप्' इति शप्प्रत्यये महतीत्यादौ 'आच्छीनद्योः—' इति नुम् स्यात्, महानित्यादौ तु 'तास्यनुदात्तेन्ङिदुपदेशात्—' इति लसार्वधातुकस्वरः स्यात्, अतिप्रत्ययान्तत्वे तु तस्यातिप्रत्ययस्यार्द्धधातुकत्वाभ्युपगमेन शबभावान्नोक्तदोष इत्याशयेनातिप्रत्ययान्तत्वेन निपातनं स्वीकृतमिति। 'बृह वृद्धौ', 'मह पूजायाम्', 'गम्लृ गतौ'॥ **पृषन्तीति**। बिन्दुवाची पृषच्छब्दो नपुंसकमिति ध्वननाय बहुवचनमुदाहृतम्। 'पृषन्मृगे पुमान् बिन्दौ न. द्वयोः **पृषतोऽ**पि ना। अनयोश्च त्रिषु श्वेतबिन्दुयुकेऽप्युभाविमौ' इति मेदिनी। '**बृहती** क्षुद्रवार्ताक्यां कण्टकार्यां च वाचि च। वारिधान्यां महत्यां च छन्दोवसनभेदयोः' इति विश्वः। शतृवद्भावात् 'उगिदचाम्—' इति नुम्। बृहन् विपुलः। '**महती** वल्लकीभेदे राज्ये तु स्यान्नपुंसकम्। तत्त्वभेदे पुमान् श्रेष्ठे वाच्यवत्' इति मेदिनी। महती नारदवीणा। '**विश्वावसोस्तु** बृहती तुम्बरोस्तु कलावती। **महती** नारदस्य स्यात्सरस्वत्यास्तु कच्छपी' इति वैजयन्ती। 'अवेक्षमाणं महतीं मुहुर्मुहुः' इति माघः।

जगत् ॥ (उ) **संश्वत्तृपद्वेहत्** ॥ एते निपात्यन्ते । पृथक्करणं शतृवद्भावनिवृत्त्यर्थम् । संचिनोतेः सुट् । इकारलोपः संश्वत् कुहकः । तृपच्छत्रम् । विपूर्वाद्धन्तेष्टिलोप इत ए च । वेहत् गर्भोपघातिनी ॥ (उ) **छन्दस्यसानच् शुजॄभ्याम्** । शवसानः पन्थाः । जरसानः पुरुषः ॥ (उ) **ऋञ्जिवृधिमन्दिसहिभ्यः कित्** ॥ ऋञ्जसानो मेघः । वृधसानः पुरुषः । मन्दसानोऽग्निर्जीवश्च । सहसानो यज्ञो मयूरश्च ॥ (उ) **अर्तेर्गुणः शुट् च** ॥ अर्शसानोऽग्निः ॥ (उ) **सम्यानच् स्तुवः** ॥ संस्तवानो वाग्ग्मी ॥ (उ) **युधिबुधिदृशिभ्यः किच्च** ॥ युधानः । बुधानः । दृशानो लोकपालकः ॥ (उ) **हुर्च्छेः सनो लुक् छलोपश्च** ॥ जुहुराणश्चन्द्रमाः ॥ (उ) **श्वितेर्दश्च** ॥ शिश्विदानः पुण्यकर्मा ॥ (उ) **तृन्तृचौ शंसिक्षदादिभ्यः संज्ञायां चानिटौ** ॥ शंसेः क्षदादिभ्यश्च क्रमात्तृन्तृचौ स्तः । तौ चानिटौ । शंस्ता स्तोता ॥ शंस्तरौ । शंस्तरः । क्षदिः सौत्रो धातुः शकलीकरणे भक्षणे च । अनुदात्तेत् । वृक्ये चक्षदानमिति मन्त्रात् । उक्षाणं वा वेहतं वा क्षदन्ते इति ब्राह्मणाच्च । क्षत्ता स्यात्सारथौ द्वाःस्थे वैश्यायामपि शूद्रजे ॥ (उ) **बहुलमन्यत्रापि** ॥ मन् । मन्ता । हन् । हन्ता । इत्यादि ॥ (उ) **नप्तृनेष्टृत्वष्टृहोतृपोतृभ्रातृजामातृमातृ-**

---

‘जगत्स्याद्विष्टपे क्लीबं वायौ ना जङ्गमे त्रिषु । जगती भुवने क्ष्मायां छन्दोभेदे जनेऽपि च’ इति मेदिनी । तत्र वायुवाचिनः पुँल्लिङ्गस्य शतृवद्भावादुगित्त्वेन नुमि जगन्, जगन्तौ, जगन्त इत्यादि भवति । ‘द्युतिगमिजुहोतीनां द्वे च’ इति व्युत्पादितस्य तु नुमभावाज्जगत्, जगतौ, जगत इत्यादीति बोध्यम् ॥ **संश्वत्–** । ‘चिञ् चयने’, ‘तृप प्रीणने’, ‘हन हिंसागत्योः’ ॥ **निपात्यन्त इति** । अतिप्रत्ययान्ता इति शेषः ॥ **निवृत्त्यर्थमिति** । एवञ्च संश्वदित्यत्र ‘उगिदचाम्–’ इति नुमः शङ्कैव नास्ति, वेहदित्यत्र तु ‘उगितश्च’ इति ङीप् नेति भावः ॥ **संचिनोतेरिति** । सुभूतिचन्द्रस्तु–‘संपूर्वाच्छ्र्यतेः संश्वत्’ इत्याह ॥ **तृपच्छत्रमिति** । चन्द्रमा इत्यन्ये । विहन्ति गर्भमिति वेहत् ॥ **इत एचेति** । विशब्दसम्बन्धिन इकारस्य एकार इत्यर्थः । गौरित्यनुवृत्तौ ‘वेहद् गर्भोपघातिनी’ इत्यमरः ॥ **छन्दसि–** । ‘शु गतौ’, ‘जॄष् वयोहानौ’ ॥ **पन्था इति** । ‘प्रथन्महः’ इत्यादिमन्त्रद्वये शवसानशब्दो गन्तृपरतया व्याख्यातः ॥ **ऋञ्जि** । ‘ऋजि भर्जने’, ‘वृधु वृद्धौ’, ‘मदिस्तुत्यादौ’, ‘षह मर्षणे’ एभ्यो असानच् कित्स्यात् ॥ **ऋञ्जसानो मेघ इति** । ऋजेरिदित्त्वान्नुम् । इदित्त्वादेव नलोपाभावः । एवं चायं मदिसही च त्रयोऽपि पूर्वसूत्र एव पठितुं शक्याः । कित्त्वं तु वृधुधातावेवोपयुज्यते । उत्तरसूत्रेऽपि गुणग्रहणं सुत्यजम्, ‘अर्तेः शुट् च’ ‘वृधेः कित्’ इत्युक्तौ सर्वसामञ्जस्यादित्याहुः । ‘ऋञ्जसानः पुरुवार उक्थैः । अस्मिन् यज्ञे मन्दसानो वृषण्वसु’ इत्यादिमन्त्राणां भाष्ये तु यौगिकार्थ एव पुरस्कृतः ॥ **अर्तेः–** । ‘ऋ गतौ’ धातोर्गुणः प्रत्ययस्य शुडागमः । ‘असाविषदर्शसानाय’ इति मन्त्रस्य भाष्ये तु ‘अर्शसानाय शत्रूणां हिंसित्रे’ इति व्याख्यातम् ॥ **समि–** । ‘ष्टुञ् स्तुतौ’ अस्मात्सम्युपपदे आनच् ॥ **युधि–** । ‘युध संप्रहारे’ युधानो रिपुः । ‘बुधिर् बोधने’ बुधान आचार्यः । ‘दृशिर् प्रेक्षणे’ । बाहुलकात्कृपेरप्यानच् । कृपाणः खड्गः । ‘कृपाणेन कथंकारं कृपणः सह गण्यते । परेषां दानसमये यः स्वकोशं विमुञ्चति’ ॥ **हुर्च्छेः–** । ‘हुर्च्छा कौटिल्ये’ अस्मात्सन्नन्तात् आनच् स्यात्सनो लुक् छलोपश्च । ‘युयोध्यस्मज्जुहुराणमेनः’ इति मन्त्रे ‘जुहुराणं कौटिल्यकारि एनः पापं युयोधि पृथक् कुरु’ इति भाष्यम् ॥ **श्वितेः–** । ‘श्विता वर्णे’ अस्मात्सन्नन्तादानच् ‘सन्यङोः’ इति द्वित्वम् । सनो लुक् तकारस्य च दकारः किदित्यनुवृत्तेर्न गुणः ॥ **पुण्यकर्मेति** । ‘शिश्विदानः पुण्यकर्मा’ इति विशेष्यनिघ्ने अमरः । अकृष्णं शुक्लं निष्पापत्वात् शुद्धं कर्म यस्येत्यर्थः । क्षीरस्वामिना तु प्रकृतसूत्रं विस्मृत्य ‘श्विदि श्वैत्ये’ अस्माल्लिटः कानजिति व्याख्यातम् । तदसंगतम्, कानचश्छान्दसत्वात्, इदित्त्वेन नलोपानुपपत्तेश्चेति दिक् ॥ **तृन्तृचौ । शंस्तेति** । ‘शंस स्तुतौ’ अस्मात्तृन् ॥ ‘अप्तृन्–’ इति सूत्रे नप्त्रादिग्रहणं नियमार्थमौणादिकतृन्तृजन्तानां चेदुपधादीर्घस्तर्हि नप्त्रादीनामेवेत्युक्तम् । तेनात्र दीर्घो नेत्युदाहरति–**शंस्तरौ, शंस्तर इति** । नित्त्वादाद्युदात्तः । तथा च मन्त्रः ‘ग्रावग्राम उत शंस्ता सुविप्रः’ । आदिशब्दात् ‘शासु अनुशिष्टौ’ शास्ति विनयति सत्त्वान् शास्ता बुद्धः, शास्तारौ शास्तारः । ‘शास्ता समन्तभद्रे ना शासके पुनरन्यवत्’ इति । प्रपूर्वस्य तु नप्त्रादिषु पाठात् ‘अप्तृन्–’ इति दीर्घः । प्रशास्तारौ, प्रशास्तारः । क्षत्ता शूद्राच्च वैश्याजे प्रतीहारे च सारथौ’ इति मेदिनी ॥ [illegible] **वैश्यायामिति** । अमरस्तु—‘क्षत्रियायां च शूद्रजे’ इत्याह । ‘णीञ् प्रापणे’ उत्पूर्वः, उन्नेता ऋत्विग्भेदः ॥ **बहुलमन्यत्रापि** । अन्यत्रापि धातोर्बहुलं तृन्तृचौ भवतः । पूर्वसूत्रस्था- …र्थमिदं सूत्रम् ॥ **नप्तृनेष्टृ–** । नप्त्रादयो दश तृन्तृजन्ता निपात्यन्ते ॥

पितृदुहितृ ॥ न पतन्त्यनेन नप्ता पौत्रो दौहित्रश्च । नयतेः पुग्गुणश्च । नेष्टा । त्विषेरितोऽत्वम् । त्वष्टा । होता । पोता ऋत्विग्भेदः। भ्राजतेर्जलोपः। भ्राता। जायां माति जामाता। मान पूजायां नलोपः। माता । पातेराकारस्य इत्त्वम्। पिता। दुहेस्तृच इड् गुणाभावश्च । दुहिता ॥ (उ०) सुञ्यसेर्ऋन् ॥ स्वसा ॥ (उ०) यतेर्वृद्धिश्च ॥ याता । भार्यास्तु भ्रातृवर्गस्य यातरः स्युः परस्परम् ॥ (उ०) नञि च नन्देः ॥ न नन्दति ननान्दा । इह वृद्धिर्नानुवर्त्तत इत्येके । ननान्दा तु स्वसा पत्युर्ननन्दा नन्दिनी च सेति शब्दार्णवः ॥ (उ०) दिवेर्ऋः ॥ देवा देवरः। स्वामिनो देवृदेवरौ ॥ (उ०) नयतेर्डिच्च ॥ ना । नरौ । नरः ॥ (उ०) सव्ये स्थश्छन्दसि ॥ अम्बाम्बेत्यत्र ॥ (वा०) स्थास्थिन्स्थूणामुपसंख्यानम् ॥ सव्येष्ठा सारथिः । सव्येष्ठरौ । सव्येष्ठरः ॥ (उ०) अर्तिसृधृधम्यम्यश्यवितृभ्योऽनिः ॥ अष्टभ्योऽनिप्रत्ययः स्यात् । अरणिरग्नेर्योनिः । सरणिः । धरणिः। धमनिः। अमनिर्गतिः । अशनिः । अवनिः। तरणिः । बाहुलकात् रजनिः ॥ (उ०) आङि शुषेः सनश्छन्दसि ॥ आशुशुक्षणिरग्निर्वातश्च ॥ (उ०) कृषेरादेश्च चः ॥ चर्षणिर्जनः ॥ (उ०) अदेर्मुट् च ॥ अद्मनिरग्निः ॥ (उ०) वृतेश्च ॥ वर्तनिः। गोवर्धनस्तु चकारान्मुट् वर्त्मनिरित्याह ॥ (उ०) क्षिपेः किच्च ॥ क्षिपणिरायुधम् ॥ (उ०) अर्चिशुचिहुसृपिच्छादिच्छर्दिभ्य इसिः ॥ अर्चिर्ज्वाला । इदन्तोऽप्ययम् । अग्नेर्र्चि-

---

**नप्तेति** । नञः प्रकृतिभावः 'पत्लृ गतौ' इत्यस्याच्छन्दलोपः। 'णीञ् प्रापणे', 'त्विष् दीप्तौ', 'हु दानादनयोः', 'पुञ् पवने' 'भ्राजृ दीप्तौ', 'मा माने', 'पा रक्षणे', 'दुह प्रपूरणे' । 'त्वष्टा पुमान् देवशिल्पितक्ष्णोरादित्यभिद्यपि' इति मेदिनी । जायां मातीत्यन्तर्भावितण्यर्थः ॥ **सुञ्यसेः**- । सुञि उपपदे 'असु क्षेपणे' इत्यस्मात् ऋन् । यणादेशः । स्वसा भगिनी । 'सावसेः' इति तु क्वाचित्कः पाठः ॥ **यतेः**- । 'यती प्रयत्ने' ॥ **नञि च**- । 'टुनदि समृद्धौ' अस्मान्नञ्युपपदे ऋन् ॥ **न नन्दतीति** । कृतायामपि सेवायां न तुष्यतीत्यर्थः । 'उषाप्युषा, ननान्दा च ननन्दा च प्रकीर्तिता' इति द्विरूपकोशः ॥ **दिवेः**-। 'दिवु क्रीडाविजिगीषादौ' ॥ **देवेति** । 'भ्रातरः' इत्यनुवृत्तौ 'स्वामिनो देवृदेवरौ' इत्यमरः ॥ **नयतेः**-। 'णीञ् प्रापणे' अस्माद् ऋप्रत्ययः स च डित् । डित्त्वाट्टिलोपः 'स्युः पुमांसः पञ्चजनाः पुरुषाः पूरुषा नरः' इत्यमरः ॥ **सव्येः**-। 'ष्ठा गतिनिवृत्तौ' अस्मात्सव्यशब्दे उपपदे ऋ स्यात्स च डित् । 'तत्पुरुषे कृति-' इति सप्तम्या अलुक् ॥ **उपसंख्यानमिति** । षत्वस्येति शेषः ॥ **अर्ति**-। 'ऋ गतौ', 'सृ गतौ', 'धृञ् धारणे', 'धमिः सौत्रः', 'अम गतौ', 'अश भोजने', 'अव रक्षणादौ', 'तॄ प्लवनतरणयोः' । 'अरणिर्वह्निमन्थे ना द्वयोर्निर्मथ्यदारुणि' इति मेदिनी । '**सरणिः** श्रेणिवर्त्मनोः' इति दन्त्यादौ रभसः । '**सरणिः** पङ्क्तौ मार्गेऽस्ति' इति मेदिनी । 'शॄ हिंसायाम्' ततोऽनिप्रत्ययः । शरणिरित्येके । '**शरणिः** पथिचापलौ' इति तालव्यादावजयः । 'इमामग्ने शरणिम्' इति मन्त्रे 'शरणिं हिंसां व्रतलोपरूपां मीमृषः क्षमस्व' इति वेदभाष्यम् ॥ धरणिर्भूमिः '**धमनी** तु शिरा हट्टविलासिन्यां तु योषिति, इति मेदिनी [1] अमनिर्गतिः । अश्यते भुज्यते राज्यमिन्द्रेणानयेति अशनिर्वज्रम् । '**अशनिः** स्त्रीपुंसयोः स्याच्चञ्चलायां स्वावपि' इति मेदिनी । अवनिः पृथिवी । 'तरणिर्द्युमणौ पुंसि कुमारीनौकयोः स्त्रियाम्, इति मेदिनी । कुमारी लताविशेषः । '**तरणी** रामतरणी कर्णिका चारुकेसरा । सहा कुमारी गन्धाढ्या' इति धन्वन्तरिनिघण्टुः ॥ **रजनिरिति** । 'रञ्ज रागे' अस्मादप्यनिः । नलोपोऽपि वाहुलकात् । कृदिकारादिति ङीष् रजनी । '**रजनी** नीलिनी रात्रिर्हरिद्राजतुकासु च' इति मेदिनी ॥ **आङि**-। 'शुष शोषणे' अस्मात्सन्नन्तादाङि उपपदे अनिः स्यात् ॥ **कृषेरादेः**-। 'कृष विलेखने' । 'चर्षणिर्जनः' इति वैदिकनिघण्टौ चर्षणिशब्दस्य मनुष्यनामसु पाठात् । 'ओमासश्चर्षणीधृतः' इत्यादिमन्त्रेषु वेदभाष्यकारैस्तथैव व्याख्यातत्वाच्च । उज्ज्वलदत्तेन तु 'आदेश्च घः' इति पठित्वा घर्षणिर्बन्धकीति व्याख्यातम् । तदयुक्तम्, तथा सति 'धृषेः' इत्येव सूत्रयेत् 'प्रागल्भ्यरूपावयवार्थानुगमात् 'आदेश्च घः' इत्यंशस्य त्यागेन लाघवाच्च । तस्मात् 'आदेश्च चः' इति दशपादीपाठ एव युक्त इत्याहुः ॥ **अदेः**-। 'अद भक्षणे' अस्मादनिस्तस्य मुडागमश्च ॥ **वृतेश्च** । 'वृतु वर्तने' अस्मादप्यनिः ॥ **वर्तनिरिति** । 'कृदिकारात्' इति ङीषि तु वर्तनी । 'सरणिः पद्धतिः पद्या वर्तन्येकपदीति च' इत्यमरः ॥ **क्षिपेः**-। 'क्षिप प्रेरणे' ॥ **क्षिपणिरायुधमिति** । 'उतस्य वाजी क्षिपणिं तुरण्यति' इति मन्त्रस्य वेदभाष्ये तु 'क्षिपणिं क्षेपणमनु तुरण्यति त्वरयति गन्तुम्' इति व्याख्यातम् ॥ **अर्चि**-। 'अर्च पूजायाम्', 'शुच शोके', 'हु दाने', 'सृप्लृ गतौ', 'छद अपवारणे ण्यन्तः' 'छर्द वमने' ॥ **अर्चिरिति** । सान्तम् । 'तमर्चिषा स्फूर्जयन्' इति मन्त्रः, 'नयनमिव सनिद्रं घूर्णते दैवमार्चिः' इति माघः । 'ज्वालाभासोर्न पुंस्यर्चिः' इति नानार्थे सान्तेष्वमरः ॥ **इदन्तोऽपीति** । णिजन्तादर्चेः 'अच इः' इति



---

1—मनोरमायां तु नोपलभ्यते ॥

जन्ते अर्चयः । शोचिर्दीप्तिः । हविः सर्पिः । इस्मन्त्रिति ह्रस्वः । छदिः पटलम् । छर्दिर्वमनव्याधिः । इदन्तोऽपि । छर्दतीसारशूलवान् ॥ ﷽ बृंहेर्नलोपश्च ॥ बर्हिर्नां कुशशुष्मणोः ॥ ﷽ द्युतेरिसिन्नादेशश्च जः ॥ ज्योतिः ॥ ﷽ वसौ रुचेः संज्ञायाम् ॥ वसुरोचिर्यज्ञः ॥ ﷽ भुवः कित् ॥ भुविः समुद्रः ॥ ﷽ सहो धश्च ॥ सधिरनड्वान् ॥ ﷽ पिबतेस्थुक् ॥ पाथिश्चक्षुः समुद्रयोः ॥ ﷽ जनेरुसिः ॥ जनुर्जननम् ॥ मनेर्धश्छन्दसि ॥ मधुः ॥ ﷽ अर्त्तिपृवपियजितनिधनितपिभ्यो नित् ॥ अरुः । परुर्ग्रन्थिः । वपुः । यजुः । तनुः, तनुषी, तनूंषि । धनुः स्त्रियाम् ॥ धनुर्वंशविशुद्धोऽपि निर्गुणः किं करिष्यति । सान्तस्य उदन्तस्य वा रूपम् । तपुः सूर्याग्निशत्रुषु ॥ ﷽ एतेर्णिच्च ॥ आयुः, आयुषी ॥ ﷽ चक्षेः शिच्च ॥ शित्त्वात्सार्वधातुकत्वेन ख्याञ्बाधः । चक्षुः ॥ ﷽ मुहेः किच्च ॥ मुहुरव्ययम् ॥ ﷽ बहुलमन्यत्रापि ॥ आचक्षुः । परिचक्षुः ॥ ﷽ कॄगॄशॄवृञ्चतिभ्यः ष्वरच् ॥ कर्वरो व्याघ्ररक्षसोः । गर्वरोऽहंकारी । शर्वरी रात्रिः । वर्वरः प्राकृतो जनः । चत्वरम् ॥ ﷽ नौ सदेः ॥ निषद्वरस्तु जम्बालः । निषद्वरी रात्रिः ॥ ॥ इत्युणादिषु द्वितीयः पादः ॥

---

भावः । ' अर्चिर्हेतिः शिखा स्त्रियाम् ' इत्यमरः ॥ ' रोचिः शोचिरुभे क्लीबे ' इति । सर्पिर्घृतम् । छद्यतेऽनया छदिः 'छदिः स्त्रियामेव ' इति लिङ्गानुशासनसूत्रम् । एवं च ' पटलं छदिः ' इत्यमरग्रन्थे पटलसाहचर्याच्छदिषः क्लीबतां वदन्त उपेक्ष्याः ॥ छर्दतीति । छर्दिश्चातिसारश्च शूलश्च तानि यस्य सन्तीति विग्रहः ॥ बृंहेः—। 'बृहि वृद्धौ' अस्मादिसिः ॥ कुशशुष्मणोरिति । शुष्मा नाम अग्निः ' अग्निर्वैश्वानरो वह्निः ' इत्युपक्रम्य 'बर्हिः शुष्मा' इत्यमरेणोक्तत्वात् ॥ द्युतेः—। द्युत दीप्तौ ' । 'ज्योतिरग्नौ दिवाकरे । पुमान् नपुंसकं दृष्टौ स्यान्नक्षत्रप्रकाशयोः ' इति मेदिनी ॥ वसौ—। ' रुच दीप्तौ' अस्माद्वसुशब्दे उपपद इसिन्स्यात्संज्ञायाम् । बाहुलकात्केवलादपि ' रोचिः शोचिरुभे क्लीबे ' इत्यमरः ॥ भुवः—। भवते-रिन्स्यात्स च कित् ॥ सहो—। ' षह मर्षणे ' अस्मादिसिन् धश्चान्तादेशः ॥ पिबतेः—। 'पा पाने' अस्मादिसिन्धातोश्च थुगागमः ॥ जनेः—। 'जनी प्रादुर्भावे' ॥ मनेः—। ' मनु अवबोधने ' अस्मादुसिः स्याच्छन्दसि धकारश्चान्तादेशः । मधु पवित्रद्रव्यम् ॥ अर्त्तिपृ—। 'ऋ गतौ', 'पॄ पालनपूरणयोः', 'डुवप् बीजसन्ताने', 'यज देवपूजादौ' 'तनु विस्तारे', 'धन धान्ये', 'तप सन्तापे ' एभ्य उसिर्नित्स्यात् । 'व्रणोऽस्त्रियामीर्ममरुः क्लीबे ' इत्यमरः । 'ग्रन्थिर्ना पर्वपरुषी ' इति च । 'वपुः क्लीबं तनौ शस्ताकृतावपि ' इति मेदिनी ' शस्ताकृतिः प्रशस्ताकृतिरित्यर्थः ॥ यजुरिति । यजुर्वेदः । 'तनुः शरीरम्' 'तनुषे तनुषेऽनङ्गम् ' इति सुबन्धुः । 'स्यात्तनुस्तनुषा सार्द्धं धनुषा च धनुं विदुः ' इति द्विरूपेषु विश्वः । ' अथास्त्रियां धनुश्चापौ ' इत्यमरः । 'धनुः प्रियाले ना न स्त्री राशिभेदे शरासने । धनुर्धरे त्रिषु' इति सान्ते मेदिनी ॥ एतेः—। ' इण् गतौ ' इत्यस्मादुसिः । णित्त्वाद् वृद्धौ कृतायामायादेशः ॥ चक्षेः—। 'चक्षिङ् व्यक्तायां वाचि ' अस्मादुसिः । शिद्भवति शित्त्वात् ख्याञादेशाभावः । चक्षते रूपमनुभवत्यनेनेति चक्षुः ॥ मुहेः—। ' मुह वैचित्ये ' । ' मुहुः पुनः पुनः शश्वदभी-क्ष्णमसकृत्समाः ' इत्यव्ययेष्वमरः ॥ कॄ गॄ—। 'कॄ विक्षेपे ', 'गॄ निगरणे ', 'शॄ हिंसायाम्' । 'वृञ् वरणे', 'चते याचने' । 'नैर्ऋतः कर्वरः क्रव्यात्कर्बुरो यातुरक्षसी ' इति शब्दार्णवः । ' शर्वरी यामिनीस्त्रियोः' इति मेदिनी । ' वर्वरः पामरे । केशविन्यासे नीवृदन्तरे । वर्वरः फञ्जिकायां तु वर्वरा शाकपुष्पयोः ।' इति विश्वः । ' वर्वरः पामरे केशचक्रले नीवृदन्तरे फञ्जिकायां पुमान् शाकपुष्पभेदभिदोः स्त्रियाम् ' इति मेदिनी ॥ 'चत्वरं स्थण्डिले गणे ' इति च ॥ नौ सदेः—। 'षद्लृ विशरणादौ' निपूर्वादस्मात्ष्वरच् स्यात् । 'सदिरप्रतेः' इति षत्वम् । निषद्वरः स्मरे पङ्के निशायां तु निषद्वरी ' इति मेदिनी ॥ ॥ इत्युणादिषु द्वितीयः पादः ॥

---

१—'पटलच्छदिषी समे' इति हैमीयाभिधानचिन्तामणिसंवादेन 'प्रायशो रूपभेदेन' इत्यादिपरिभाषानुरोधेन च छदिषः क्लीबत्वस्यैव न्याय्यत्वात्, लिङ्गानुशासनसूत्रस्य प्रामाणिकत्वे 'लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्य' इति वदता भाष्यकृताप्यश्रद्धे-[illegible] ॥

**छित्वरछत्वरधीवरपीवरमीवरचीवरतीवरनीवरगह्वरकट्वरसंयद्वराः** ॥ एकादश ष्वरच्प्रत्ययान्ता निपात्यन्ते। छिदिर् छद् अनयोस्तकारोऽन्तादेशः, छिदेर्गुणाभावश्च । छित्वरो धूर्तः । छत्वरो गृहकुञ्जयोः । धीवरः कैवर्तः । पीवरः स्थूलः । मीवरो हिंसकः । चिनोतेर्दीर्घश्च । चीवरं भिक्षुकप्रावरणम् । तीवरो जातिविशेषः । नीवरः परिव्राट् । गाहतेर्ह्रस्वत्वम् । गह्वरम् । कटे वर्षादौ । कट्वरं व्यजनम् । यमेर्दकारः । संयद्वरो नृपः । पदेः सम्पद्वर इत्येके ॥ **इण्सिञ्जिदीङुष्यविभ्यो नक्** ॥ इनः सूर्ये नृपे पत्यौ । सिनः काणः । जिनोऽर्हन् । दीनः । उष्णः । ऊनः ॥ **फेनमीनौ** ॥ एतौ निपात्येते । स्फायतेः फेनः । मीनः ॥ **कृषेर्वर्णे** ॥ कृष्णः ॥ **बन्धेर्ब्रधिबुधी च** ॥ ब्रध्नः । बुध्नः ॥ **धाप्रृवस्यज्यतिभ्यो नः** ॥ धाना भृष्टयवे स्त्रियः । पर्णं पत्रम् । पर्णः किंशुकः । वस्नो मूल्ये वेतने च । अजेर्वी । वेनः । अत्न आदित्यः । बाहुलकात् शृणोतेः—श्रोणः पङ्गुः ॥ **लक्षेरट् च** ॥ लक्षेश्चुरादिण्यन्तान्नः स्यात्तस्याडागमश्च । चान्मुडिलेके । लक्षणं लक्ष्मणं नाम्नि चिह्ने च । लक्षणो लक्ष्मणश्च रामभ्राता । लक्षणा हंसयोषायां सारसस्य च लक्ष्मणा ॥ **वनेरिच्चोपधायाः** ॥ वेन्ना नदी ॥ **सिवेष्टेयू च** ॥ दीर्घोच्चारणसामर्थ्याद्ध गुणः। स्यून आदित्यः। बाहुलकात् केवलो नः । ऊठ् । अन्तरङ्गत्वाद्यण् । गुणः। स्योनः ॥ **कृवृजृसिद्रुपन्यनिस्वपिभ्यो नित्** ॥ कर्णः । वर्णः । जर्णश्चन्द्रे च वृद्धे च । सेना । द्रोणः । पन्नो नीचैः

---

छित्वर—। अनयोरिति । 'छिदिर् द्वैधीकरणे', 'छद अपवारणे'। 'छित्वरश्छेदने द्रव्ये धूर्ते वैरिणिच त्रिषु' इति मेदिनी । 'डुधाञ् धारणपोषणयोः', 'पा पाने', 'मा माने' एषां त्रयाणामीत्त्वमन्तस्य निपात्यते इत्येके । अन्ये तु 'पीव मीव तीव नीव स्थौल्ये' एभ्यः ष्वरचि 'लोपोव्योः' इति लोपमाहुः । 'पीवरः कच्छपे स्थूले' इति मेदिनी॥ मीवर इति । हिंसक इत्यर्थानुगुण्येन 'मीञ् हिंसायाम्' इत्यस्मात् ष्वरजिति केचिदाहुः । 'तीवरो नाऽम्बुधौ व्याधे' इति मेदिनी । 'स्यान्नीवरो वाणिजिके वास्तवेऽपि च दृश्यते' इति मेदिनीविश्वप्रकाशौ ॥ गाहतेरिति । 'गाहू विलोडने' 'कट्वरं कुत्सिते वाच्यलिङ्गं तक्रे नपुंसकम्' इति मेदिनी । बाहुलकादुपपूर्वक—'हु दानादनयोः' इत्यस्मात्ष्वरच्युकारलोपः । 'उपह्वरं समीपे स्यादेकान्तेऽपि नपुंसकम्' इति मेदिनी । उपह्वरो रथ इति केचित् ॥ इण्—। 'इण् गतौ', 'षिञ् बन्धने', 'जि जये', 'दीङ् क्षये', 'उष दाहे', 'अव रक्षणे'। 'इनः पत्यौ नृपार्कयोः' इति मेदिनी । 'जिनोऽर्हति च वृद्धे च पुंसि स्यात् त्रिषु जित्वरे' इति च । 'दीना मूषिकयोषायां दुर्गते कातरेऽन्यवत्' इति विश्वः । 'उष्णो ग्रीष्मे पुमान् दक्षाशीतयोरन्यलिङ्गकः' इति मेदिनी । 'ज्वरत्वर—' इत्यूठौ । ऊनमसम्पूर्णम् ॥ फेन—। 'स्फायी वृद्धौ' अस्य फे इत्यादेशः । 'मीञ् हिंसायाम्' । 'डिंडीरोऽब्धिकफः फेनः' इत्यमरः । 'मीनो राश्यन्तरे मत्स्ये' इति विश्वः ॥ कृषेः—। 'कृष विलेखने' अस्माद्वर्णे वाच्ये नक् स्यात् । 'कृष्णः सत्यवतीपुत्रे केशवे वायसेऽर्जुने । कृष्णा स्याद् द्रौपदीनीलीकणाद्राक्षासु योषिति। मेचके वाच्यलिङ्गः स्यात् क्लीबे मरिचलोहयोः' इति मेदिनी॥ बन्धेः—। 'बन्ध बन्धने' अस्मान्नक् । 'भास्करोऽहस्करो ब्रध्नः प्रभाकरदिवाकरौ' । इत्यमरः । 'बुध्नो ना मूलरुद्रयोः' इति मेदिनी ॥ धाप्रृ—। 'डुधाञ् धारणादौ', 'प्रृ पालनादौ', 'वस निवासे', 'अज गतौ', 'अत सातत्यगमने' एभ्यो नः स्यात् । नक्प्रत्यये सति तु वस्न इत्यत्र संप्रसारणं स्यात्, वेन इत्यत्र तु गुणो न स्यादिति भावः । 'धाना भृष्टयवे प्रोक्ता धान्याकेऽभिनवोद्भिदि' इति विश्वः । 'पर्णं पत्रं किंशुके ना' इति मेदिनी । 'वस्नस्त्ववक्रये पुंसि वेतने स्यान्नपुंसकम्' इति च ॥ वेन इति । लुण्टाकः प्रजापतिश्च ॥ लक्षेः—। 'लक्ष दर्शनाङ्कनयोः' लक्षणमित्यादि । लक्षणलक्ष्मणशब्दौ द्वावपि नामचिह्नयोः क्लीबौः रामभ्रातरि तु पुंलिङ्गौ हंसयोषायां लक्षणा सारसस्य योषायान्तु लक्ष्मणेति व्यवस्थेत्यर्थः । 'लक्षणं नाम्नि चिह्ने च सौमित्रिरपि लक्षणः । लक्ष्मणं लांछने नाम्नि रामभ्रातरि लक्ष्मणः' इति विश्वः । 'लक्षणो लक्ष्मणोऽपि च' इति द्विरूपेषु च विश्वः । 'लक्षणं नाम्नि चिह्ने च सारस्यां लक्षणा क्वचित्। लक्ष्मणा त्वौषधीभेदे सारस्यामपि योषिति । रामभ्रातरि पुंसि स्यात् सश्रीके चाभिधेयवत्' इति मेदिनीकोशे तु 'सारस्यामपि 'लक्षणा' इति निर्मकारः स्वीकृतः ॥ वनेः—। 'वन सम्भक्तौ' अस्मान्न उपधाया इत्वं च ॥ वेन्नेति । लघूपधगुणः ॥ सिवेः—। 'षिवु तन्तुसन्ताने' ॥ बाहुलकादिति । एतच्च 'च्छ्वोः शूठ्—' इति सूत्रे वृत्तौ 'येन विधिः' इति सूत्रे कैयटग्रन्थे च स्पष्टम् ॥ यणिति । लघूपधगुणे कृते त्वेकारस्यायादेशे ऊठोऽपि 'सार्वधातुका—' इत्यादिना गुणे कृते सयोन इति स्यादिति भावः । 'स्योनः किरणसूर्ययोः' इति मेदिनी ॥ कृ वृ—। 'कॄ विक्षेपे', 'वृञ् वरणे' दीर्घपाठे तु 'वॄ वरणे', 'जॄष् वयोहानौ', दिवादिः, जॄ इति क्र्यादौ चुरादौ च, 'षिञ् बन्धने', 'द्रु गतौ', 'पन स्तुतौ', 'अन प्राणने', 'ञिष्वप् शये' एभ्यो नप्रत्ययो नित्स्यात् । 'कर्णः पृथाज्येष्ठसुते सुवर्णालौ श्रुतावपि' इति विश्वमेदिन्यौ । 'वर्णो द्विजादिशुक्लादियज्ञगणकथासु च । स्तुतौ ना न स्त्रियां भेदे रूपाक्षरविलेखने' इति मेदिनी ॥ विश्वमेदिनीद्वयमाह—जर्णश्चन्द्र इति । 'जर्णो जीर्णद्रुमेन्दुषु' इति हेमचन्द्रः । 'ध्वजिनी वाहिनी सेना' इत्यमरः। 'द्रोणो-

र्गतिः । अन्नमोदनः । स्वप्नो निद्रा ॥ (उ॰) धेट इच्च ॥ धेनः सिन्धुर्नदी धेना ॥ (उ॰) तृषिशुषिरसिभ्यः कित् ॥ तृष्णा । शुष्णः सूर्यो वह्निश्च । रस्नं द्रव्यम् ॥ (उ॰) सुञो दीर्घश्च ॥ सूना वधस्थानम् ॥ (उ॰) रमेस्त च ॥ रमयतीति रत्नम् ॥ (उ॰) रास्नासास्नास्थूणावीणाः ॥ रास्ना गन्धद्रव्यम् । सास्ना गोगलकम्बलः । स्थूणा गृहस्तम्भः । वीणा वल्लकी ॥ (उ॰) गादाभ्यामिष्णुच् ॥ गेष्णुर्गायनः । देष्णुर्दाता ॥ (उ॰) कृत्यशूभ्यां क्स्नः ॥ कृत्स्नम् । अक्ष्णमखण्डम् ॥ (उ॰) तिजेर्दीर्घश्च ॥तीक्ष्णम् ॥ (उ॰) श्लिषेरच्चोपधायाः ॥ श्लक्ष्णम् ॥ (उ॰) यजिमनिशुन्धिदसिजनिभ्यो युच् ॥ यज्युरध्वर्युः । मन्युर्दैन्ये क्रतौ क्रुधि । शुन्ध्युरग्निः । दस्युस्तस्करः । जन्युः शरीरी ॥ (उ॰) भुजिमृङ्भ्यां युक्त्युकौ ॥ भुज्युर्भाजनम् । मृत्युः ॥ (उ॰) सर्तेरयुः ॥ सरयुर्नदी । अयूरिति पाठान्तरम् । सरयूः ॥ (उ॰) पानीविषिभ्यः पः ॥ पाति रक्षत्यस्मादात्मानमिति पापम् । तद्योगात्पापः । नेपः पुरोहितः । बाहुलकाद्गुणाभावे नीपो वृक्षविशेषः । वेष्पः पानीयम् ॥ (उ॰) च्युवः किच्च ॥ च्युपो वक्त्रम् ॥ (उ॰) स्तुवो दीर्घश्च ॥ स्तूपः समुच्छ्रायः ॥ (उ॰) सुशृभ्यां निच्च ॥ चात्कित् । सूपः । बाहुलकादुत्वम् । शूर्पम्॥ (उ॰) कुयुभ्यां च ॥ कुवन्ति मण्डूका अस्मिन् कूपः । युवन्ति बध्नन्त्यस्मिन्पशुमिति यूपो यज्ञस्तम्भः ॥ (उ॰) खष्पशिल्पशष्पबाष्परूपपर्पतल्पाः ॥ सप्तैते पप्रत्ययान्ता निपात्यन्ते । खनतेर्नकारस्य षत्वम् । खष्पौ क्रोधबलात्कारौ । शीलतेर्ह्रस्वः । शिल्पं कौशलम् । शसु हिंसायाम् । निपातनात्षत्वम् । शष्पं बालतृणं प्रतिभाक्षयश्च । बाधतेः षः । बाष्पो नेत्रजलोष्मणोः । बाष्पं च । रौतेर्दीर्घः । रूपं स्वभावे सौन्दर्ये । पॄ । पर्पं गृहं बालतृणं पङ्गुपीठं च । तल प्रतिष्ठाकरणे चुरादिणिचो लुक् । तल्पं शय्याट्टदारेषु ॥ (उ॰) स्तनिहृषिपुषिगदिमदिभ्यो णेरित्नुच् ॥

---

ऽस्त्रियामाढके स्यादाढकादिचतुष्टये । पुमान् कपीपतौ कृष्णकाके स्त्री नीवृदन्तरे । स्त्रियां काष्ठाम्बुवाहिन्यां गवादन्यामपीष्यते ' । ' अन्नं भक्ते च भुक्ते स्यात् ' इति मेदिनी । ' स्वप्नः स्वापे प्रसुप्तस्य विज्ञाने दर्शने पुमान् ' इति मेदिनी ॥ **धेट्** । ' धेट् पाने ' अस्मान्नः स्यादिच्चान्तादेशः । ' **धेना** नद्यां नदे पुमान् ' इति मेदिनी । ' **धेनः** समुद्रे नद्यां च **धेना** ' इति विश्वः । ' श्लोको धारा ' इत्यादिषु वाङ्नामसु धेनेति वैदिकनिघण्टौ पठितम् । अत एव ' धेना जिगाति दाशुषे ' इत्यादिमन्त्रेषु धेना वागिति व्याख्यातं भाष्ये ॥ **तृषि**–। 'ञितृषा पिपासायाम् ', ' शुष शोषणे ', ' रस शब्दे ' । '**तृष्णा** लिप्सापिपासयोः ' इति विश्वः ॥ **सुञः**–। ' षुञ् अभिषवे' अस्मान्नः स्याद्धातोर्दीर्घश्च । ' **सूना**ऽधोजिह्विकाऽपि च ' इति नान्तेऽमरः । ' **सूनं** प्रसवपुष्पयोः । **सूना** पुत्र्यां वधस्थानगलकुण्डिकयोः स्त्रियाम् ' इति मेदिनी ॥ **रमेः**—। रमेर्ण्यन्तान्नः । ' **रत्नं** स्वजातिश्रेष्ठेऽपि मणावपि नपुंसकम् ' इति मेदिनी ॥ **रास्ना**—। ' रस आस्वादने ' उपधादीर्घः । '**रास्ना** तु स्याद्भुजङ्गाक्ष्यामेलापर्ण्यामपि स्त्रियाम् ' इति मेदिनी । ' षस स्वप्ने ' उपधादीर्घः । ' **सास्ना** तु गलकम्बले ' इत्यमरः । ' **सास्ना** गोगलकम्बले ' इति पाठांतरम् । ष्ठा गतिनिवृत्तौ इत्यस्य ऊत्वं प्रत्ययस्य णत्वं च । ' अथ **स्थूणा** स्यात्सूर्म्यां स्तम्भे गृहस्य च' इति मेदिनी । सूर्मी लोहप्रतिमा । ' वी गत्यादिषु ' गुणाभावो णत्वं च । ' वीणा विद्युति' वल्लक्याम् ' इति मेदिनी ॥ **गादाभ्याम्**—। ' गै शब्दे' ' डुदाञ् दाने '। ' गेष्णुर्नटे गायके च'। 'देष्णुर्दातारि दुर्दमे' इति विश्वः ॥ **कृत्यशू**–। ' कृती वेष्टने ', ' अशू व्याप्तौ ' '**कृत्स्नं** सर्वाम्बुकुक्षिषु ' इति मेदिनी ॥ **तिजेः**—' तिज निशाने ' अस्मात्क्स्नः, धातोर्दीर्घश्च । ' **तीक्ष्णं** सामुद्रलवणे विषलोहाजिमुष्कके । क्लीबं यवाग्रके पुंसि तिग्मात्मत्यागिनोस्त्रिषु' इति मेदिनी ॥ **यजिः**–। 'यज देवपूजादौ', 'मन ज्ञाने', 'शुंध: शुद्धौ', 'दसु उपक्षये', 'जनी प्रादुर्भावे' । '**दस्यु**श्चौरे रिपौ पुंसि' इति मेदिनी । 'अथ **जन्युः** स्यात्पुंसि प्राण्यग्निधातृषु' इति च ॥ **भुजि**—। 'भुज पालनादौ', 'मृङ् प्राणत्यागे' आभ्यां यथासंख्यं युक्त्युकौ स्तः । '**मृत्यु**र्ना मरणे यमे' इति मेदिनी ॥ **सर्तेः**—। 'सृ गतौ' ॥ **पानी**–। 'पा रक्षणे', 'णीञ् प्रापणे', 'विष्लृ व्याप्तौ' '**नीपः** कदम्बबन्धूकनीलाशोकद्रुमेऽपि च' इति मेदिनी ॥ **च्युवः**–। 'च्युङ् गतौ' धातूनामनेकार्थत्वादिह भाषणे । च्यवन्ते भाषन्तेऽनेनेति विग्रहः । दशपाद्यां तु 'चुपः किच्च' इति पठ्यते । 'चुप मन्दायां गतौ' चोपतीति चुप्पः मन्दगमनकर्ता ॥ **स्तुवः**—। 'ष्टुञ् स्तुतौ' अस्मात्पः स्याद्धातोर्दीर्घश्च ॥ **सुशॄ**—। 'षुञ् अभिषवे', 'शॄ हिंसायाम्' आभ्यां पः स्यात्स निद्वति, नित्त्वं तु स्वरार्थम् । '**सूपो** व्यञ्जनसूदयोः' इति मेदिनी ॥ **शूर्पमिति** । बाहुलकादुत्वं रपरत्वं 'हलि च' इति दीर्घः । 'प्रस्फोटनं शूर्पमस्त्री' इत्यमरः ॥ **कुयु**—। 'कु शब्दे', 'यु मिश्रणे' आभ्यां पः, स च निद्धातोर्दीर्घत्वं च ॥ **खष्पशिल्प**–। 'खनु अवदारणे', 'शील समाधौ', 'बाधृ लोडने', 'रु शब्दे', 'पॄ पालनादौ' । 'खष्पः क्रोधे बलात्कृतौ' इति विश्वः । शष्पं बालतृणेऽपि च । पुंसि स्यात्प्रतिभाहानौ' इति मेदिनी । विश्वोक्तिमाह–बाष्प इति ॥ 'बाष्पमूष्मणि चाश्रुणि' इति कोशान्तरमभिप्रेत्याह–बाष्पं चेति । 'तल्पं मदे कलत्रे च शयनीये च न द्वयोः' इति मेदिनी ॥ अमरोक्तिमाह–तल्पं शय्येति ॥ **स्तनि**-हृषि–। 'स्तनगदी देवशब्दे' चुरादिण्यन्तौ, 'हृष तुष्टौ', 'पुष पुष्टौ', 'मदी हर्षग्लेपनयोः' घटादिः । एभ्यो ण्यन्तेभ्य इत्नुच् स्यात् । '**स्तनयित्नुः** पुमान् वारिधरेऽपि स्तनितेऽपि च' इति मेदिनी । '**स्तनयित्नुः** पयोवाहे तद्ध्वनौ मृगरोगयोः'

अयामन्तेति णेरयादेशः। स्तनयित्नुः। हर्षयित्नुः। पोषयित्नुः। गदयित्नुर्वावदूकः। मदयित्नुर्मदिरा॥ 🔅 कृहनिभ्यां क्त्नुः॥ कृत्नुः शिल्पी। हत्नुर्व्याधिः शस्त्रं च॥ 🔅 गमेः सन्वच्च॥ जिगत्नुः॥ 🔅 दाभाभ्यां नुः॥ दानुर्दाता। भानुः॥ 🔅 वचेर्गश्च॥ वग्नुः॥ 🔅 धेट इच्च॥ धयति सुतानिति धेनुः॥ 🔅 सुवः कित्॥ सूनुः पुत्रेऽनुजे रवौ॥ 🔅 जहातेर्द्वे अन्तलोपश्च॥ जह्नुः॥ 🔅 स्थो णुः॥ स्थाणुः कीले स्थिरे हरे॥ 🔅 अजिवृरीभ्यो निच्च॥ अजेर्वी वेणुः। वर्णुर्नददेशभेदयोः। रेणुर्द्वयोः स्त्रियां धूलिः॥ 🔅 विषेः किच्च॥ विष्णुः॥ 🔅 कृदाधारार्चिकलिभ्यः कः॥ बाहुलकान्न कसेतसंज्ञा। कर्कों धवलघोटकः। दाको दाता। धाकोऽनड्वानाधारश्च। राका पौर्णमासी। अर्कः। कल्कः पापाशये पापे दम्भे विट्किट्टयोरपि॥ 🔅 सृवृभूशुषिमुषिभ्यः कक्॥ सृक उत्पलवातयोः। वृकः श्वापदकाकयोः। भूकं छिद्रम्। शुष्कः। मुष्कोऽण्डम्॥

---

इति विश्वः। 'हर्षयित्नुः सुते हेम्नि पोषयित्नुः पिके द्विजे' इति च। 'गदयित्नुः पुमान् कामे जल्पाके कार्मुकेऽपि च' इति विश्वमेदिन्यौ। 'मदयित्नुः कामदेवे पुमान् मद्ये नपुंसकम्' इति मेदिनी॥ **कृहनि-।** 'डुकृञ् करणे', 'हन हिंसागत्योः'॥ **कृत्नुरिति।** कर्तेत्यर्थः। कित्त्वान्न गुणः॥ **हत्नुरिति।** 'अनुदात्तोपदेश-' इत्यादिना अनुनासिकलोपः। एवमुत्तरत्र गमेः क्त्नुप्रत्यये गत्नुरित्यपि बोध्यः॥ **शस्त्रं चेति।** चाद्धन्ता। दशपाद्यांवृत्तौ तु क्नुरिति तकाररहितं पठित्वा कृणुः कर्ता, हनुः वक्त्रैकदेशः। बाहुलकान्नलोपः। गमेस्तु जिगन्तुरित्युदाहृतं, तत्सर्वं प्रामादिकम्। लक्ष्यविसंवादात्। तथा च श्रूयते-'पुरुपकृत्नुमूर्तये', 'ज्येष्ठराजं भरे कृत्नु', 'मानो वधाय हत्नवे', 'मृगं भीममुपहत्नुमुग्रम्' 'यो नः सनुत्य उतवा जिगत्नुः' इत्यादि। अत एव हन्तिधातुं विवृण्वता माधवेन उपहत्नुरित्युदाहृत्य क्नोः कित्त्वादनुनासिकलोप इत्युक्तम्॥ **दाभाभ्याम्-।** 'डुदाञ् दाने' 'भा दीप्तौ'। 'दानुर्दातरि विक्रान्ते' इति मेदिनी। 'भानू रश्मिदिवाकरौ' इत्यमरः॥ **वचेः-।** 'वच परिभाषणे' वग्नुर्वाचालः॥ **धेटः-।** 'धेट् पाने' अस्मान्नुः स्यादिकारश्चान्तादेशः। 'धेनुः स्यान्नवसूतिका' इत्यमरः॥ **सुवः-।** 'षूङ् प्राणिप्रसवे' अस्मान्नुः स्यात्स च कित्॥ विश्वोक्तिमाह-**सूनुः पुत्रे इति॥ जहातेः।** 'ओहाक् त्यागे' 'जह्नुः स्यात्पुंसि राजर्षिभेदे च मधुसूदने' इति मेदिनी॥ **स्थो णुः।** 'ष्ठा गतिनिवृत्तौ' अस्माण्णुः स्यात्। विश्वोक्तिमाह-**स्थाणुरिति।** 'स्थाणुः कीले हरे पुमान्। अस्त्री ध्रुवे' इति मेदिनी॥ **अजिवृ-।** 'अज गतौ', 'वृङ् सम्भक्तौ', 'री गतिरेषणयोः' एभ्यो णुर्नित्स्यात्। 'वेणुर्नृपान्तरे वंशे' इति विश्वः। 'रेणुः स्त्रीपुंसयोर्धूलौ पुँल्लिङ्गः पर्पटे पुनः' इति मेदिनी॥ **विषेः-**'विष्लृ व्याप्तौ' अस्माण्णः स्यात्स च किच्चान्नित्। निरवादाद्युदात्तत्वम्। 'विष्णुरिद्धा'। 'विष्णुर्नारायणः कृष्णः' इत्यमरः॥ **कृदा-।** 'डुकृञ् करणे', 'डुदाञ् दाने', 'डुधाञ् धारणपोषणयोः', 'रा दाने' 'अर्च पूजायाम्', 'कल गतौ'। '**कर्कः** कर्के तले वह्नौ शुक्लश्वे दर्पणे घटे' इति विश्वमेदिन्यौ। '**राका** नवन्तरे कच्छ्वां नवजातरजः- स्त्रियाम्। संपूर्णेन्दुतिथौ' इति मेदिनी। '**राका** तु सरिदन्तरे। **राका** नवरजःकन्या पूर्णेन्दुः पूर्णिमापि च' इति विश्वः। इह दा धा रा एषां 'केणः' इति ह्रस्वो बाहुलकात्संज्ञापूर्वकविधेरनित्यत्वाद्वा नेति बोध्यम्। **अर्को**ऽर्कपर्णे स्फटिके रवौ ताम्रे दिवस्पतौ' इति विश्वमेदिन्यौ। '**कल्को**ऽस्त्री घृततैलादिशेषे दम्भे विभीतके। विट्किट्टयोश्च पापे च त्रिषु पापाशये पुनः' इति मेदिनी। बाहुलकाद्रमेरपि कः 'रंकः कृपणमन्दयोः' इति मेदिनी। कपिलकादित्वाल्लत्वं टाप् '**लंका** रक्षःपुरीशाखाशाकिनीकुलटासु च' इति विश्वमेदिन्यौ॥ **सृ-।** 'सृ गतौ', 'वृञ् वरणे' 'भू सत्तायाम्' 'शुष शोषणे', 'मुष स्तेये'॥ **सृक इति।** 'सृकं संशाय पविमिन्द्र तिग्मम्' इति मन्त्रस्य वेदभाष्ये तु 'सृकं सरणशीलं पविं वज्रं संशाय सम्यक् तीक्ष्णीकृत्य' इति व्याख्यातम्। 'भूकं छिद्रे च काले च' इति मेदिनी 'मुष्को

---

१ नेतीति-इदं च 'केऽणो ह्रस्वत्वे तद्धितग्रहणं कर्तव्यम्रवृत्त्यर्थम्' * इति वार्तिकस्य राका। धाका इत्यादौ ह्रस्वाकरस्य प्रत्याख्यानाय 'तर्हि वक्तव्यम्। न वक्तव्यम्, उणादयोऽव्युत्पन्नानि प्रातिपदिकानि' इत्यादि भाष्यकृता तद्विस्मृतिमूलकमेवेति बोध्यम्॥

ॐ शुकवल्कोल्काः ॥ शुभेरन्त्यलोपः । शुकः । वल्कं वल्कलमस्त्रियाम् । उष दाहे । षस्य लः । उल्का ॥ ॐ इण्भी-कापाशल्यतिमर्चिभ्यः कन् ॥ एके मुख्यान्यकेवलाः । भेको मण्डूकमेषयोरिति विश्वमेदिन्यौ । काकः । पाकः शिशुः । शल्कं शकलम् । अत्कः पथिकः, शरीरावयवश्च । मर्कः शरीरवायुः ॥ ॐ नौ हः ॥ जहातेः कन् स्यान्नौ । निहाका गोधिका ॥ ॐ नौ सदेर्डिच्च ॥ निष्कोऽस्त्री हेम्नि तत्पले ॥ ॐ स्यमेरीट् च ॥ स्यमीको वल्मीकः वृक्षभेदश्च । इट् ह्रस्व इति केचित् । स्यमिकः ॥ ॐ अजियुधूनीभ्यो दीर्घश्च ॥ वीकः स्याद्वातपक्षिणोः । यूका । धूको वायुः । नीको वृक्षविशेषः ॥ ॐ ह्रियो रश्च लो वा ॥ ह्रीका ह्लीका त्रपा मता ॥ ॐ शकेरुनोन्तोन्त्युनयः ॥ उन उन्त उन्ति उनि एते चत्वारः स्युः । शकुनः । शकुन्तः । शकुन्तिः । शकुनिः ॥ ॐ भुवो झिच् ॥ भवन्तिर्वर्तमानकालः । बाहुलकादवेश्च । अवन्तिः । वदेर्वदन्तिः । किंवदन्ती जनश्रुतिः ॥ ॐ कन्युच् क्षिपेश्च ॥ चाद्भुवः । क्षिपण्युर्वसन्त इत्युज्ज्वलदत्तः । भुवन्युः स्वामिसूर्ययोः ॥ ॐ अनुङ् नदेश्च ॥ चात्क्षिपेः । नदनुर्मेघः । क्षिपणुर्वातः ॥ ॐ कृवृदारिभ्य उनन् ॥ करुणो वृक्षभेदः स्यात्करुणा च कृपा मता । वरुणः । दारुणम् ॥ ॐ त्रो रश्च लो वा ॥ तरुणस्तलुनो युवा ॥ ॐ क्षुधिपिशिमिथिभ्यः कित् ॥ क्षुधुनो

---

मोक्षकवृक्षे स्यात्संघाते वृषणेऽपि च ' इति स एव । ' शुको व्याससुते कीरे रावणस्य च मन्त्रिणि । शिरीषपादपे पुंसि ग्रन्थिपर्णे नपुंसकम्' । ' वल्कं वल्कलशल्कयोः ' इति च । ' उल्का ज्वाला विभावसोः ' इति सुभूतिचन्द्रः । इण्भी–' इण् गतौ ', ' ञिभी भये ', ' कै शब्दे ', 'पा पाने ', ' शल गतौ ', ' अत सातत्यगमने ' । 'एकं संख्यान्तरे श्रेष्ठे केवलेतरयोस्त्रिषु ' इति मेदिनी । ' काकः स्याद्वायसे वृक्षप्रभेदे पीठसर्पिणि । शिरोवक्षालने मानप्रभेदद्वीपभेदयोः । काका स्यात्काकनासायां काकोलीकाकजङ्घयोः । रक्तिकायां मलय्वां च काकमाच्यां च योषिति । काकं सुरतबन्धे स्यात्काकानामपि संहतौ ' इति मेदिनीविश्वप्रकाशौ । ' पाकः परिणतौ शिशौ । केशस्य जरसा शौक्ल्ये स्थाल्यादौ पचनेऽपि च ' इति मेदिनी । ' शल्कं तु शकले वल्के ' इति च । ' मर्च ' इति सौत्रो धातुरिति बहवः । ' मर्च शब्दे ' चौरादिक इति ' मिदचोऽन्त्यात्परः ' इति सूत्रे कैयटः । ' मर्त्तो मर्तं मर्चयति द्वयेन ' इति मन्त्रे मर्चयति विधेयीकरोति भर्त्सयतीति वेदभाष्यम् । न चैवं णिलोपस्य स्थानिवद्भावेन कुत्वाभावान्मर्क इति न सिद्ध्येदिति वाच्यम्, पूर्वत्रासिद्धे तदभावात् । ' शो तनूकरणे ' अस्मादपि बाहुलकात्कन् । ' शाको द्वीपान्तरेऽपि च । शक्तौ द्रुमविशेषे च पुमान् हारीतकेऽस्त्रियाम् ' इति मेदिनी ॥ नौ हः । ' ओहाक् त्यागे ' अस्मान्निशब्दे उपपदे कन्स्यात् । ' निहाका गोधिका समे ' इत्यमरः ॥ नौ सदेः–। ' षद्लृ विशरणे ' अस्मान्निशब्दे उपपदे कन् स्यात्स च डिद्डित्त्वाट्टिलोपः । ' सदिरप्रतेः ' इति षत्वम् । ' निष्कमस्त्री साष्टहेमशते दीनारकर्षयोः । वक्षोऽलङ्करणे हेममात्रे हेमपलेऽपि च ' इति मेदिनी ॥ स्यमेः—। ' स्यमु शब्दे ' अस्मात्कन्स्यात्तस्य च ईडागमः । ' स्यमीका नीलिकायां स्त्री स्यमीको नाकवृक्षयोः ' इति मेदिनी ॥ अजि—। ' अज गतिक्षेपणयोः ' ' यु मिश्रणे ', ' धुञ् कम्पने ', ' णीञ् प्रापणे ' एभ्यः कन् स्यादेषां दीर्घश्च, तत्सामर्थ्याद् गुणाभावः । अजेर्वीभावः ॥ ह्रियः–। ' ह्री लज्जायाम् ' अस्मात्कन्धातोर्दीर्घत्वं च, तत्सामर्थ्याद् गुणाभावः ॥ शकेः–। ' शक्लृ शक्तौ ' । ' शकुन्तिपक्षिशकुनिशकुन्तशकुनद्विजाः ' इत्यमरः । ' शकुनस्तु पुमान् पक्षिमात्रपक्षिविशेषयोः । शुभशंसिनिमित्ते च शकुनं स्यान्नपुंसकम् ' इति मेदिनी ॥ ' शकुन्तः कीटभेदे स्याद्भासपक्षिविहङ्गयोः ' इति । ' शकुनिः पुंसि विहगे सौबले करणान्तरे ' इति च ॥ भुवः–। ' भू सत्तायाम् ' अस्मात् झिच् स्यात् । ' झोऽन्तः ' । ' कृदिकारात् ' इति ङीष् , भवन्ती लटः संज्ञा । तथा– च ' अस्तिर्भवन्तीपरः प्रयोक्तव्यः ' इति भाष्यम् । बाहुलकात्कमेरपि प्रत्ययादिलोपे धातोः कुशब्दादेशः कुन्तिः । ' इतो मनुष्यजातेः ' इति ङीष् । ' कुन्ती पाण्डुप्रियायां च शल्लक्यां गुग्गुलुभे ' इति मेदिनी ॥ अवन्तिरित्यादि । ' अव रक्षणे ', ' वद व्यक्तायां वाचि ' आभ्यामपि झिच् ॥ वदन्तीति । ' कृदिकारात् ' इति वा ङीष् ॥ कन्युच्–। ' क्षिप प्रेरणे ', 'भू सत्तायाम् ' । ' क्षिपण्युस्तु पुमान् देहे सुरभौ वाच्यलिङ्गकः ' इति मेदिनी ॥ ' भुवन्युः स्यात्पुमान् भानौ ज्वलने ' इति विश्वमेदिन्यौ ॥ अनुङ्–। ' नद अव्यक्ते शब्दे ' अस्मादनुङ् प्रत्ययः स्यात् ॥ क्षिपणुरिति । ' ङित्वाद् गुणाभावः ॥ कृवृ–। ' कॄ विक्षेपे ', ' वृञ् वरणे ', ' दॄ विदारणे ' ण्यन्तः । ' करुणस्तु रसे वृक्षे कृपायां करुणा मता ' इति विश्वमेदिन्यौ । ' वरुणस्तरुभेदेऽप्सु प्रतीचीपतिसूर्ययोः ' इति विश्वः । ' दारुणं भीष्मम् ' इत्यमरः । ' दारुणो रसभेदे ना त्रिषु तु स्याद्भयावहे ' इति मेदिनी ॥ त्रो—। ' तॄ प्लवनतरणयोः ' अस्मादुनन् स्यात् । ' तरुणं कुब्जपुष्पे ना रुचके यूनि तु त्रिषु ' इति मेदिनी । गौरादित्वात् ङीष् । ' तरुणी तलुनीति च ' इति द्विरूपेषु विश्वः ॥ क्षुधि–। ' क्षुध बुभुक्षायाम् ', ' पिश अवयवे ' अयं दीपनायामपि, ' मिथिः सौत्रो



---

१ अस्य प्रायस्तद्धितान्तेष्वेव प्रवृत्तेश्चिन्त्यमेतत् । अत एव ' कृदिकारादिसुचितम् ' इति शब्दरत्नम् ॥

ग्लानिः । हानिः । तूर्णिः । बाहुलकान्म्लानिः ॥ (उ) घृणिपृश्निपार्ष्णिचूर्णिभूर्णि ॥ एते पञ्च निपात्यन्ते । घृणिः । किरणः । स्पृशतेः सलोपः । पृश्निरल्पशरीरः । पृषेर्वृधिश्च । पार्ष्णिः पादतलम् । चरेरुपधाया उत्त्वम् । चूर्णिः कपर्दकशतम् । बिभर्तेरुत्वम् । भूर्णिर्धरणी ॥ (उ) वृदृभ्यां विन् ॥ र्वावर्वसमरः । दर्विः ॥ (उ) जॄशॄस्तॄजागृभ्यः क्विन् ॥ जीर्विः पशुः । शीर्विर्हिंस्रः । स्तीर्विरध्वर्युः । जागृविर्नृपः ॥ (उ) दिवो द्वे दीर्घश्चाभ्यासस्य ॥ दीदिविः स्वर्गमोक्षयोः ॥ (उ) कृविघृष्विछविस्थविकिकीदिवि ॥ कृविस्तन्तुवायद्रव्यम् ॥ घृष्विर्वराहः । छास्थोर्ह्रस्वत्वं च । छविर्दीप्तिः । स्थविस्तन्तुवायः । दीव्यतेः किकिपूर्वात् । किकीदिविश्चाषः बाहुलकाद्ध्रस्वदीर्घयोर्विनिमयः । चाषेण किकिदीविना ॥ (उ) पातेर्डतिः ॥ पतिः ॥ (उ) शकेर्ऋतिन् ॥ शकृत् ॥ (उ) अमेरतिः ॥ अमतिः कालः ॥ (उ) वहिवस्यर्तिभ्यश्चित् ॥ वहतिः पवनः । वसतिर्गृहयामिन्योः । अरतिः क्रोधः ॥ (उ) अञ्चेः को वा ॥ अङ्कतिः, अञ्चतिर्वातः ॥ (उ) हन्तेरंह च ॥ हन्तेरतिः स्यादंहादेशश्च धातोः । हन्ति दुरितमनया अंहतिर्दानम् । प्रादेशनं निर्वपणमपवर्जनमंहतिः ॥ (उ) रमेर्नित ॥ रमतिः कालकामयोः ॥ (उ) सूङः क्रिः ॥ सूरिः ॥ (उ) अदिशदिभूशुभिभ्यः क्रिन् ॥ अद्रिः । शद्रिः शर्करा । भूरि प्रचुरम् । शुभ्रिर्ब्रह्मा ॥ (उ) वङ्क्र्यादयश्च ॥ क्रिन्नन्ता निपात्यन्ते । वङ्क्रिर्वाद्यभेदो गृहदा

---

रुणि । पुमान् कूपीपतौ कृष्णकाके स्त्री नौवृदन्तरे ॥' इति मेदिनी । ग्लानिर्दौर्बल्यम् । हानिरपचयः ॥ घृणि—। 'घृ सेचने', 'स्पृश संस्पर्शने', 'पृषु सेचने', 'चर गतौ', 'डुभृञ् धारणपोषणयोः' । निप्रत्ययो गुणाभावश्च निपात्यते। 'घृणिः पुनः । अंशुज्वालातरङ्गेषु' इति हेमचन्द्रः । 'पृश्निरल्पतनौ' इत्यमरः । 'पार्ष्णिः स्यादुन्मदस्त्रियाम् । स्त्रियां द्वयोः सैन्यपृष्ठे पादग्रन्थ्यधरेऽपि च' इति मेदिनी ॥ भूर्णिरिति । 'तकान भूर्णिः' इति मन्त्रभाष्ये तु भूर्णिर्धारकः पोषको वेति व्याख्यातम् ॥ वृदृ—। 'वृञ् वरणे', 'दृङ् आदरे' । स्त्रियां 'कृदिकारात्—' इति ङीष् । दर्वी ॥ जॄ शॄ—। 'जॄ वयोहानौ', 'शॄ हिंसायाम्', 'स्तॄञ् आच्छादने', 'जागृ निद्राक्षये' । क्विनः कित्त्वात् 'ॠत इद्धातोः' इति इत्वे रपरत्वे जीर्विरित्यादि ॥ दिवो—। 'दिवु क्रीडादौ' अस्मात्क्विन् कित्त्वाद् गुणाभावः । 'दीदिविर्धिषणानयोः' इति विश्वः । 'दीदिविर्ना धिषणेऽन्ने तदस्त्रियाम्' इति मेदिनी । धिषणो बृहस्पतिः । 'दीदिविर्द्वादशकरश्चक्षुः । सुरगुरुर्गुरुः' इति त्रिकाण्डशेषः । 'दीदिविर्द्वादशार्चिः स्याज्जीवः प्राक्फल्गुनीसुतः' इति हारावली । 'ओदनोऽस्त्री सदीदिविः' इत्यमरः । अत्र सदीदिविर्दीदिविसहित इति व्याख्यानं न्याय्यम् । अत्र स इति विशेषणाद्दीदिवेः पुँल्लिङ्ग इति केषांचिद्व्याख्यानं नादर्तव्यम् । स इति च्छेदने तु अस्त्रियामिति न लभ्येत, ततश्च 'अन्ने तदस्त्रियाम्' इति पूर्वोक्तमेदिनीग्रन्थो विरुध्येतेति ध्येयम् । 'गोपामृतस्य दीदिविम्' इति मन्त्रे तु द्योतमानमित्यर्थः ॥ कृविघृष्वि—। 'डुकृञ् करणे', 'घृषु सेचने' 'छो छेदने', 'ष्ठा गतिनिवृत्तौ', 'दिवु क्रीडादौ' एते क्विन्नन्ताः ॥ घृष्विर्वराह इति । 'उग्रस्य यूनस्थविरस्य घृष्वेः' इति मन्त्रे तु घृष्वेः कामानां वर्षकस्येत्यर्थ इति व्याख्यातम् । 'घृषु सेचने' इति धात्वर्थानुगमात् । 'छविः शोभारुचोर्योषित्' इति मेदिनी । 'अथ चाषः किकीदिविः' इत्यमरः । विनिमय इति । 'किकिदीविः किकीदिवौ' इति द्विरूपकोशः ॥ पातेः—। 'पा रक्षणे' । डित्त्वाट्टिलोपः । 'पतिर्धवे ना त्रिष्वीशे' इति मेदिनी ॥ शकेः—। 'शक्लृ शक्तौ' । 'उच्चारावस्करौ शमलं शकृत । गूथं पुरीषं वर्चस्कमस्त्रियाम्' इत्यमरः ॥ अमेः—। 'अम गतौ' । 'अथामतिः पुंसि हिमदीधितिकाल्योः' इति मेदिनी । 'अमितिश्चामतिः काले' इति द्विरूपेषु विश्वः ॥ वहि—। 'वह प्रापणे' 'वस निवासे', 'ऋ गतौ' । 'वसतिः सचिवे गवि' इति विश्वः । 'वसतिः स्यात् स्त्रियां वासे यामिन्यां च निकेतने' इति मेदिनी ॥ अञ्चेः—। 'अञ्चु गतौ' अस्मादतिः स्यात्ककारश्चान्तादेशो विकल्पेन ॥ हन्तेः—। 'हन हिंसागत्योः' ॥ अमरोक्तिमाह—प्रादेशनमित्यादि ॥ रमेः—। रमतेरतिः स्यात्स च नित्। 'रमतिर्नायके नाके पुंसि स्यात्' इति मेदिनी । नित्त्वमाद्युदात्तार्थम् । 'रन्तिरसि रमतिरसि' ॥ सूङः—। 'षूङ् प्राणिप्रसवे' कित्त्वाद् गुणाभावः । 'पुमान् सूरिः कृती कृष्टिर्लब्धवर्णो विचक्षणः' इत्यमरः । दशपाद्यां तु 'सुवो रिन् दीर्घश्च' इति पाठः । तत्र रिनो नकारो नानुबन्धः, उत्तरसूत्रे क्रिन्प्रत्ययारम्भात् । अनुबन्धत्वे हि लाघवादिहैव क्रिन्नुच्येत । तथा च सूरी सूरिणो सूरिण इत्यादि रूपम् । अत एवाभिधानमालायां सूरीति नान्तमुदाहृतमित्यवधेयम् । दशपादीवृत्तिकारैस्तु नित्त्वं स्वीकृत्य सूरिरित्युदाहृतं, तदेतेन प्रत्युक्तम् । स्वरविरुद्धमपि 'सदा पश्यन्ति सूरयः', 'विसूरयो दधातो विश्वमायुः' इत्यादौ सूरिशब्दस्यान्तोदात्तत्वदर्शनात् ॥ अदि—। 'अद भक्षणे', 'शद्लृ शातने', 'भू सत्तायाम्', 'शुभ शुम्भ शोभार्थे' 'अद्रयो द्रुमशैलार्काः' इत्यमरः । 'भूरिर्ना वासुदेवे च हरे च परमेष्ठिनि । नपुंसकं सुवर्णे च प्राज्ये स्याद्वाच्यलिंगकः' इति मेदिनी ॥ वङ्क्र्यादयः—। 'वकि कौटिल्ये', 'डुवप् बीजसन्ताने' । निपातनात्सम्प्रसारणा-

रु दार्श्यस्थि च । वम्रिः क्षेत्रम् । अङ्घ्रिरङ्घ्रिश्च चरणः । तदिः सौत्रो धातुः । तन्द्रिर्मोहः । बाहुलकाद् गुणः । भेरिः ॥ राशदिभ्यां त्रिप् ॥ रात्रिः । शत्रिः कुञ्जरः ॥ अदेस्त्रिनिश्च ॥ चात्त्रिप् । अत्त्री । अत्त्रिणौ । अत्त्रिणः । अत्त्रिः । अत्त्री । अत्त्रयः ॥ पतेरत्रिन् ॥ पतत्रिः पक्षी ॥ मृकणिभ्यामीचिः ॥ मरीचिः । कणीचिः पल्लवो निनादश्च ॥ श्वयतेश्चित् ॥ श्वयीचिर्व्याधिः ॥ वेञो डिच्च ॥ वीचिस्तरङ्गः । नञ्समासे अवीचिर्नरकभेदः ॥ ऋहनिभ्यामूषन् ॥ अरूषः सूर्यः । हनूषो राक्षसः ॥ पुरः कुषन् ॥ पुर अग्रगमने । पुरुषः । अन्येषामपीति दीर्घः । पूरुषः ॥ पॄनहिकलिभ्य उषच् ॥ परुषम् । नहुषः । कलुषम् ॥ पीयेरूषन् ॥ पीय इति सौत्रो धातुः । पीयूषम् । बाहुलकाद्गुणे पेयूषोऽभिनवं पयः ॥ मस्जेर्नुम् च ॥ मञ्जूषा ॥ गण्डेश्च ॥ गण्डूषः । गण्डूषा ॥ अर्तेररुः ॥ अररुः शत्रुः । अररू । अररवः ॥ कटः किच्च ॥ कुटरुर्वस्त्रगृहम् । कित्त्वप्रयोजनं चिन्त्यम् ॥ शकादिभ्योऽटन् ॥ शकटोऽस्त्रियाम् । ककिर्गत्यर्थः । कङ्कटः स-

---

भावः । 'अङ्घिर्भाषार्थः' चुरादिण्यन्तः', 'अचि गतौ गत्यारम्भे च', 'ञिभी भये' ॥ **तन्द्रिरिति** । 'कृदिकारात्-' इति ङीष् । 'तन्द्री निद्राप्रमीलयोः' इति मेदिनी । '**तन्द्री तन्द्रिश्च** तन्द्रायाम्' इति द्विरूपकोशः । 'विभज्य नक्तंदिवमस्ततन्द्रिणा' इति भारविः ॥ प्रत्ययस्य कित्त्वाद्गुणाभावमाशङ्कयाह—**बाहुलकादिति** ॥ **राशदि—**। 'रा दाने' 'शद्लृ शातने'।'शात्रिर्नाऽम्भोधरे विष्णौ' इति मेदिनी । 'शात्रिमग्र उपमाकेतुमर्यः'इति मन्त्रस्य वेदभाष्ये उपमा उपमानभूतं केतुं प्रख्यातं शत्रिमेतन्नामकं राजर्षिमिति व्याख्यातम्॥**अदेः—**।'अद भक्षणे'। अत्त्रिर्मुनिभेदः । उज्ज्वलदत्तादयस्तु'अदेस्त्रिन्' इति पठित्वा अत्त्रिरित्युदाजह्रुस्तन्न । त्रिपैवेष्टसिद्धौ प्रत्ययान्तरवैयर्थ्यात् । गोवर्धनस्तु—'अदेस्त्रिन्' इति पठित्वा निदिति वचनान्नकारस्य नेत्संज्ञा । अत्त्री अत्त्रिणौ अत्त्रिण इत्याह । तदपि नित्त्वे सत्याद्युदात्तत्ववत्तान चेष्टापात्तिः, 'जहीन्या अत्त्रिणं पणिम्', 'अग्ने हंसिन्या अत्त्रिणम्' इत्यादावन्तोदात्तस्य निर्विवादत्वात् । अत एव 'न लुमताङ्गस्य' इति सूत्रे 'अदेस्त्रिनिश्च' इत्येव कैयटोऽप्याहेति दिक् ॥ **पतेः—**। 'पत्लृ गतौ' **पतत्रिरिति** । पक्षवाचकात्पतत्रशब्दान्मत्वर्थे इनि तु नान्तः । पतत्री पतत्रिणौ पतत्रिण इत्यादि ॥ **मृकणि—**। 'मृङ् प्राणत्यागे', 'कण शब्दार्थः'। मरीचिः कृपणे दीप्तौ ऋषिभेदे च दृश्यते' इति विश्वः । '**मरीचिर्मुनिभेदे** ना गभस्तावनपुंसकम्' इति मेदिनी । 'कणीचिः पुष्पितलतागुञ्जयोः शकटे त्रियाम्' इति च ॥ **श्वयतेः—**। 'टु ओश्वि गतिवृद्ध्योः' अस्मादीचिप्रत्ययश्चित्स्यात् ॥ **वेञः—**। 'वेञ् तन्तुसन्ताने' अस्मादीचिर्डित्स्यात् । '**वीचिः** स्वल्पे तरङ्गे स्यादवकाशे सुखे द्वयोः' इति विश्वमेदिन्यौ ॥ **ऋहनि—**। 'ऋ गतौ', 'हन हिंसागत्योः' ॥ **पुरः—**। कुषणः कित्त्वाद् गुणाभावः । '**पुरुषः** पूरुषे सांख्यज्ञे च पुंनागपादपे' इति विश्वमेदिन्यौ ॥ **पॄनहि—**। 'पॄ पालनपूरणयोः', 'णह बन्धने', 'कल शब्दसंख्यानयोः' । '**परुषं** कर्बुरे रूक्षे निष्ठुरोक्तौ च वाच्यवत्' इति मेदिनी । '**नहुषो** राजविशेषे नागभिद्यपि' इति हेमचन्द्रः । उषचश्चित्त्वान्नहुषशब्दस्यान्तोदात्तत्वे प्राप्ते ग्रामादित्वाद्वृषादित्वाद्वाद्युदात्तत्वमित्याहुः । एतच्च 'देवा अकृण्वन्नहुषस्य विश्पतिम्' इति मन्त्रस्य भाष्ये स्पष्टम् । '**कलुषं** त्वाविलैनसोः' इति विश्वः ॥ **पीयेः—**। 'पीयूषममृतं सुधा' इत्यमरः । '**पीयूषं** सप्तदिवसावधिक्षीरे तथामृते' इति मेदिनी । अमरोक्तिमाह—**पेयूष इत्यादि** ॥ **मस्जेः—**। 'टुमस्जो शुद्धौ' अस्मादूषन्स्यान्नुमागमश्च धातोः । मिदचोऽन्त्यात्परः, सस्य श्चुत्वेन शस्तस्य जश्त्वेन जस्तस्य 'झरो झरि' इति वा लोपः । लोपाभावपक्षे जकारद्वयम् । मञ्जूषा काष्ठमयं द्रव्यं पेटक इति यावत् । 'पिटकः पेटकः पेटा **मञ्जूषा**' इत्यमरः ॥ **गण्डेः—**। 'गडि वदनैकदेशे' । '**गण्डूषो** मुखपूरणः' ॥ **अर्तेः—**। 'ऋ गतौ' । उकारान्तोऽयं प्रत्ययो न तु संकारान्त इति स्फोरयति—**अररू** । **अररवः इत्यनेन** । न चोकारान्तत्वे विवदितव्यम्, 'कश्चिद्याविररुं सूरमर्त्यम्', 'आपाररुमदेवयजना जहि' इत्यादिमन्त्रेषु तथा दर्शनात् । अत्र व्याचक्षते—'मानः शंसोररुषः' इति मन्त्रस्य भाष्ये सान्तोऽयमिति माधवेनोक्तं यत्, तत्प्रौढिवादमात्रं न तु वास्तवम्, अररुष इति पदस्य आद्युदात्तत्वाद्युपपत्तिप्रसङ्गात् । तस्माद्रातेः लिटः 'क्वसुश्च' इति क्वसौ ररिवानित्यनेन नञ्समासे ङस्यररुष इति व्याख्येयम् । ततश्च 'तत्पुरुषे तुल्यार्थ—' इत्यादिना पूर्वपदप्रकृतिस्वरे सत्याद्युदात्तत्वं सिद्ध्यति, 'गुरुद्वेषोऽररुषे दधन्ति' इत्यत्र स्वयमेव रातेः क्वस्वन्तस्य नञ्समास इत्यादिव्याख्यानात्, 'यो नो अग्ने अररिवां अघायुः' इत्यादिमन्त्रान्तरसंवादाच्चेति ॥ **कुटः—**। कुट कौटिल्ये । अस्मादरुः स्यात्स च कित् ॥ **चिन्त्यमिति** । 'गाङ्कुटादिभ्यः—' इति ङित्त्वेनैव गुणाभावसिद्धेरिति भावः ॥ **शकादीति** । शकिर्गत्यर्थः । 'शक्लृ शक्तौ' इत्यस्मादटन्नित्येके ।

ग्राहः। देवटः शिल्पी। करट इत्यादि ॥ (उ) कृकदिकडिकटिभ्योऽम्बच् ॥ करम्बं व्यामिश्रम्। कदिकडी सौत्रौ। कदम्बो वृक्षभेदः। कडम्बोऽग्रभागः। कटम्बो वादित्रम् ॥ (उ) कदेर्णित्पक्षिणि ॥ कादम्बः कलहंसः ॥ (उ) कलिकर्द्योरमः ॥ कलमः। कर्दमः ॥ (उ) कुणिपुल्योः किन्दच् ॥ कुण शब्दोपकरणयोः। कुणिन्दः शब्दः। पुलिन्दो जातिविशेषः ॥ (उ) कुपेर्वा वश्च ॥ कुपिन्दकुविन्दौ तन्तुवाये ॥ (उ) नौ षञ्जेर्घथिन् ॥ निषङ्गथिरालिङ्गकः ॥ (उ) उद्यर्तेश्चित् ॥ उदरथिः समुद्रः ॥ (उ) सर्तेर्णिच्च ॥ सारथिः ॥ (उ) खर्जिपिञ्जादिभ्य ऊरोलचौ ॥ खर्जूरः। कर्पूरः। वल्लूरं शुष्कमांसम्। पिञ्जूलं कुशवर्तिः ॥ (उ) लङ्गेर्वृद्धिश्च ॥ लाङ्गूलम्। कुसूलः ॥ (उ) तमेर्वुग्वृद्धिश्च ॥ ताम्बूलम् ॥ (उ) शृणातेर्दुग्वृद्धिश्च ॥ शार्दूलः ॥ (उ) दुकोः कुक्च ॥ दुकूलम्। कुकूलम् ॥ (उ) कुवश्चट् दीर्घश्च ॥ कूची चित्रलेखनिका ॥ (उ) समीणः ॥ समीचः समुद्रः। समीची हरिणी ॥ (उ) सिवेष्टेरू च ॥ सूचो दर्भाङ्कुरः। सूची (उ) ॥ शमेर्बन् ॥ शम्बो मुसलम् ॥ (उ) उल्बादयश्च ॥ बन्नन्ता निपात्यन्ते। उच समवाये। चस्य लत्वं गुणाभावश्च। उल्बो गर्भाशयः। शुल्बं ताम्रम्। बिम्बम् ॥ (उ) स्थः स्तोऽम्बजबकौ ॥ तिष्ठतेरम्बच् अबक एतौ स्तस्तादेशश्च। स्तम्बो गुच्छस्तृणादीनाम्। स्तबकः पुष्पगुच्छः ॥ (उ) शाशपिभ्यां दद-

---

'क्लीबेऽनः शकटोऽस्त्री स्यात्' इत्यमरः। 'देवृ देवने' ॥ **करट इति**। 'डुकृञ् करणे', 'कॄ विक्षेपे' इत्यस्माद्वा अटन्। 'काकेभगण्डौ **करटौ**' इत्यमरः। '**करटो** गजगण्डे स्यात्कुसुम्भे निन्द्यजीविनि। एकादशाहादिश्राद्धे दुर्दुरूढेऽपि वायसे' इति मेदिनी ॥ **कृकदि**–। 'डुकृञ् करणे', 'कटे वर्षावरणयोः'। '**करम्बो** मिश्रिते वान्तो, भान्तस्तु दधिसक्तुषु' इति विश्वः। '**कदम्बं** निकुरम्बं स्यान्नीपसर्षपयोः पुमान्' इति विश्वः ॥ **कलि**–। 'कल संख्याने', 'कर्द कुत्सिते शब्दे' '**कलमः** पुंसि लेखिन्यां शालौ पाटच्चरेऽपि च' इति मेदिनी ॥ **कुणिपुल्योः**–। 'पुल महत्त्वे' ॥ **कुपेः**–। 'कुप क्रोधे' अस्मात्किन्दच् स्यात् वकारश्चान्तादेशो विकल्पेन। 'तन्तुवायः **कुविन्दः** स्यात्' इत्यमरः। बाहुलकात् 'अल भूषणादौ' अलिन्दम्। 'यस्यामलिन्देषु न चक्रुरेव मुग्धाङ्गना गोमयगोमुखानि' इति माघः ॥ **नौ षञ्जेः**–। 'षञ्ज सङ्गे' निपूर्वादस्मात् घथिन्स्यात्। 'उपसर्गात्सुनोति–' इत्यादिना षत्वम्। 'चजोः–' इति कुत्वम्। 'आभुरस्य निषङ्गथिः'। रथकूबर इत्यर्थः॥**उद्यर्तेः**–। 'ऋ गतौ' उत्पूर्वादस्मात् घथिन् स्यात्, स च चित् ॥ **सर्तेः**–। 'सृ गतौ' अस्मात् घथिन् णित्स्यात्। 'नियन्ता प्राजिता यन्ता सूतः क्षत्ता च **सारथिः**' इत्यमरः ॥ **खर्जि**–। 'खर्ज मार्जने', 'पिञ्ज हिंसायाम्'। खर्जादिभ्यः पिञ्जादिभ्यश्च यथाक्रमम् ऊरऊलचौ स्तः। '**खर्जूरं** रूप्यफलयोः, **खर्जूरः** कीटवृक्षयोः'। इति मेदिनीहेमचन्द्रौ। 'कृपू सामर्थ्ये' बाहुलकात् 'कृपो रो लः' इति लत्वाभावः। 'अथ **कर्पूरमस्त्रियाम्**। घनसारश्चन्द्रसंज्ञः सिताभ्रो हिमवालुका' इत्यमरः। 'वल्ल संवरणे' वल्लूरम्। 'उत्तप्तं शुष्कमांसं स्यात्तद्वल्लूरं त्रिलिङ्गकम्' इत्यमरः। एवं शालूरादयो द्रष्टव्याः' 'भेके मण्डूकवर्षाभूशालूरप्लवदर्दुराः' इत्यमरः ॥ **लङ्गेः**–। लगिर्गत्यर्थः। 'लाङ्गूलं पुच्छशेफसोः' इति मेदिनी ॥ **कुसूल इति**। 'कुस श्लेषणे' दन्त्यसकारवान् '**कुसूलं** च कुसीदञ्च मध्यदन्त्यमुदाहृतम्' इति विश्वः। ताम्बूलादयोऽप्यत्र द्रष्टव्याः। 'तमु ग्लानौ' वुग् दीर्घत्वञ्च। '**ताम्बूलो** नागवल्ल्यां स्त्री क्रमुके तु नपुंसकम्' इति। 'शॄ हिंसायाम्' धातोर्वृद्धिर्दुगागमश्च। '**शार्दूलो** राक्षसान्तरे। व्याघ्रे च पशुभेदे च पत्तने तूत्तरस्थितः' इति मेदिनीविश्वप्रकाशौ। उत्तरास्थितः उत्तरपदभूतः। शार्दूलशब्दस्तु श्रेष्ठवाची राजशार्दूल इति यथा। 'दु गतौ', 'कु शब्दे' अनयोः कुक्च '**दुकूलं** श्लक्ष्णवस्त्रे स्यात् क्षौमे च' इति मेदिनी। '**कुकूलं** शङ्कुसंकीर्णश्वभ्रे ना तु तुषानले' इति विश्वमेदिन्यौ। 'शिरीषादपि मृद्वङ्गी केयमायतलोचना। अयं क्व च कुकूलाग्निकर्कशो मदनानलः' इति प्रयोगश्च॥**कुवः**-।'कु शब्दे' कूचः स्तनः। 'कुचकूचौ स्तनौ मतौ' इति विश्वः।कुचीति टित्त्वान्ङीप् ॥**समीणः**–।'इण् गतौ' अस्मात्सम्युपपदे चट् स्याद्दीर्घश्च धातोः॥**सिवेः**–।'षिवु तन्तुसंताने' अस्माच्चट् प्रत्ययः स्यात्, टेरूत्वं च, टित्त्वान्ङीप्। '**सूची** तु सीवनद्रव्येऽप्याङ्गिकाभिनयान्तरे' इति मेदिनी ॥ **शमेः**– 'शमु उपशमे'। '**शम्बः** स्यान्मुसलाग्रस्थलोहमण्डलके पवौ। शुभान्विते त्रिषु' इति विश्वमेदिन्यौ ॥ **उल्बमिति**। 'गर्भाशयो जरायुः स्यादुल्बं तु कललेऽस्त्रियाम्' इत्यमरः। 'शुच शोके' चस्य लत्वं गुणाभावश्च प्रागवत्। '**शुल्बं** ताम्रे यज्ञकर्मण्याचारे जलसंनिधौ' इति मेदिनीहेमचन्द्रौ। 'वी गतिप्रजनकान्त्यसनखादनेषु' अस्य नुमागमो ह्रस्वत्वञ्च। वबयोरभेदाद्बिम्बम्। 'बिम्बस्तु प्रतिबिम्बे स्यान्मण्डले पुंनपुंसकम्। बिम्बकायाः फले क्लीबं कृकलासे पुनः पुमान्'। इति मेदिनी ॥ **स्थस्तः**–। 'ष्ठा गतिनिवृत्तौ'। '**स्तम्बो** गुल्मे तृणादीनामप्रकाण्डद्रुमेऽपि च' इति विश्वः '**स्तम्बोऽप्रकाण्डगुल्मगुच्छयोः**' इति मेदिनी। 'स्याद् गुच्छकस्तु **स्तबकः**' इत्यमरः ॥ **शाशपि**–। 'शो तनूकरणे', 'शप

नौ ॥ शादो जम्बालशष्पयोः शब्दः ॥ (उ) अब्दादयश्च ॥ अवतीत्यब्दः ॥ (उ) कौतेर्नुम् ॥ कुन्दः ॥ (उ) वलिमलितनिभ्यः कयन् ॥ वलयम् । मलयः । तनयः ॥ (उ) वृह्रोः षुग्दुकौ च ॥ वृषय आश्रयः । हृदयम् ॥ (उ) मिपीभ्यां रुः ॥ मेरुः । पेरुः सूर्यः । बाहुलकात् पिबतेरपि । संवत्सरवपुः पारुः पेरुर्वासीर्दिनप्रणीः ॥ (उ) जत्र्वादयश्च ॥ जत्रु, जत्रुणी । अश्रु, अश्रुणी ॥ (उ) रुशातिभ्यां क्रुन् ॥ रुरुर्मृगभेदः । शातयतीति शत्रुः । प्रज्ञादौ पाठाद्ध्रस्वत्वम् ॥ (उ) जनिदाच्युसृवृमदिषमिनमिभृञ्भ्य इत्वन्त्वन्त्नन्क्निन्शक्स्यढडटाटचः ॥ जनित्वौ मातापितरौ । दात्वो दाता । च्यौत्नो गन्ता अण्डजः क्षीणपुण्यश्च । सृणिरङ्कुशश्चन्द्रः सूर्यो वायुश्च । वृशः आर्द्रकं मूलकं च । मत्स्यः । षण्ढः । डित्त्वाट्टिलोपः । नमतीति नटः शैलूषः । बिभर्ति भरटः कुलालो भृतकश्च ॥ (उ) अन्येभ्योऽपि दृश्यन्ते ॥ पेत्वममृतम् । भृशम् ॥ (उ) कुसेरुम्भोमेदेताः ॥ कुसुम्भम् । कुसुमम् । कुसीदम् । कुसीतो जनपदः ॥ (उ) सानसिवर्णसिपर्णसितण्डुलाङ्कुशचषालेल्वलपल्वलधिष्ण्यशल्याः ॥ सनोतेरसिप्रत्यय उपधावृद्धिः । सानसिर्हिरण्यम् । वृञो नुक् च । वर्णसिर्जलम् । पॄ । पर्णसिर्जलगृहम् । तड आघाते । तण्डुलाः ।

---

आक्रोशे ' । ' शादो जम्बालशष्पयोः ' इत्यमरः । ' शष्पं बालतृणं घासः ' इति च । ' **शादः** स्यात्कर्दमः शष्पे ' इति मेदिनी । शब्दो निनादः ॥ **अब्दादयः** । एते दन्नन्ता निपात्यन्ते । ' अव रक्षणे ' वस्य वः । ' **अब्दः** संवत्सरे वारिवाहमुस्तकयोः पुमान् ' इति मेदिनी ॥ **कौतेः**–। ' कु शब्दे ' । ' **कुन्दो** माघ्येऽस्त्री मुकुन्दभ्रमिनिध्यन्तरेषु ना ' इति च मेदिनी ॥ **वलिमलि**–। ' वल संवरणे संचरणे च ', ' मल मल्ल धारणे ', ' तनु विस्तारे ' । ' **वलयः** कण्ठरोगे ना कङ्कणे पुंनपुंसकम् ' इति मेदिनी । ' **मलयः** पर्वतान्तरे । शैलांशे देश आरामे त्रिवृतायां तु योषिति ' इति च । ' आत्मजस्तनयः सूनुः सुतः पुत्रः ' इत्यमरः ॥ **वृह्रोः**–। ' वृञ् वरणे ', ' हृञ् हरणे ' आभ्यां कयन् स्यात्, यथाक्रमं षुग्दुगागमौ च भवतः । कयनः कित्त्वं त्विह गुणाभावार्थम् । ह्रियते विषयैरिति हृदयं मनः ॥ **मिपीभ्याम्**–। ' डुमिञ् प्रक्षेपणे ', ' पीङ् पाने ' । ' **मेरुः** सुमेरुर्हेमाद्रिः ' इत्यमरः । पीयते रसानिति पेरुः ॥ **पिबतेरिति** । ' पा पाने ' । हरदत्तोक्तिमाह–**संवत्सरवपुरित्यादि** । **जत्र्वादयः**–। रुप्रत्ययान्ता निपात्यन्ते । ' जनी प्रादुर्भावे ' नकारस्य तकारः जत्रुः स्कन्धसन्धिः । ' संधी तस्यैव **जत्रुणी** ' इत्यमरः । तस्य पूर्वोक्तस्य स्कन्धस्य संधी इत्यर्थः । ' असु क्षेपणे ', ' अशू व्याप्तौ संघाते च ' असु अश्रु च नयनजलम् । शीङो ह्रस्वत्वं गुगागमश्च । ' **शिग्रुर्ना** शाकमात्रेऽपि शोभाञ्जनमहीरुहे ' इति मेदिनी ॥ **रुशाति**–। ' रु शब्दे ', ' शद्लृ शातने ' ण्यन्तः । ' कृष्णसाररुरुन्यङ्कुरङ्कुशम्बररौहिषाः ' इत्यमरः । ' **रुरुर्दैत्ये** मृगेऽपि च ' इति मेदिनी ॥ **जनिदा**—। ' जनी प्रादुर्भावे ', ' डुदाञ् दाने ', ' च्युङ् गतौ ', ' सृ गतौ ', ' वृञ् वरणे ', ' मदी हर्षे ', ' षम ष्टम अवैक्लव्ये ', ' णम प्रह्वत्वे शब्दे च ', ' डुभृञ् धारणपोषणयोः ' । एभ्यो नवभ्यो यथासंख्यं नव स्युः । जनेरित्वन् । जनेरिडागमेनापि जनित्वेति रूपसिद्धावि कारोच्चारणमुत्तरार्थम् ॥ **च्यौत्न इति** । त्नणो णित्त्वाद्वृद्धिः ॥ **सृणिरिति** । क्निनः कित्त्वान्न गुणः । नित्त्वं त्वाद्युदात्तार्थम् । ' सृवृषिभ्यां कित् ' इति निप्रत्यये त्वन्तोदात्तः साधितः ॥ **वृश इति** । शकः कित्त्वान्न गुणः ॥ **मत्स्य इति** । स्यप्रत्यये चर्त्वेन दस्य तः । अन्तोदात्तोऽयम् । ' ऋतन्यञ्जि–' इति सूत्रे तु आद्युदात्तः साधितः ॥ **षण्ढ इति** । बाहुलकाद्धात्वादेः षस्य सकारो न, प्रत्ययादेर्ढस्य तु प्रयोजनाभावान्नेत्संज्ञा । ' शमेर्ढः ' इति सूत्रे तु तालव्यादिः साधितः । ' सायं सायो भवेत्कोशः कोषः **षण्ढश्च शण्ढ**वत् ' इति द्विरूपकोशः । ' **षण्ढो** वर्षवरः ' इत्यमरः ॥ **नट इति** । नमतेर्डटः । ' **नटी** नल्यौषधी स्त्री स्याच्छैलूषाशोकयोः पुमान् ' इति मेदिनी ॥ **भरट इति** । बिभर्तेरटच् । **अन्येभ्योऽपि** । इत्वन्नादयोऽनुवर्तन्ते ॥ **पेत्वमिति** । ' पा पाने ' अस्मादित्वन् ॥ **भृशमिति** । भृञः शक् ॥ **कुसेः**–। ' कुस श्लेषणे ' अस्मादुम्भ उम ईद इत एते प्रत्ययाः स्युः । ' **कुसुम्भं** हेमनि महारजने ना कमण्डलौ ' इति मेदिनी । **कुसुमं** स्त्रीरजोनेत्ररोगयोः फलपुष्पयोः ' इति च । ' **कुसीदं** जीवने वृद्ध्यां क्लीबं त्रिषु कुसीदके ' इति च । इह सूत्रे तृतीयो ह्रस्वादिर्दीर्घादिश्च मन्त्रेणोपात्तः । ' वृषाकप्यग्नि–' इति सूत्रे ह्रस्वादिरेवेति वृत्तिकारहरदत्तादिग्रन्थोपष्टम्भेन निर्णीतम् । ' पारलौकिककुसीदसीदत् ' इति श्रीहर्षप्रयोगात्तु दीर्घादिरपि ॥ **सानसि** । **सनोतेरिति** । ' षणु दाने ' ॥ **वृञो नुक् चेति** । ' वृञ् वरणे ' अस्मादसिः । दशपाद्यां तु ' सानसिवर्णसि–' इति पठित्वा घृञो नुक् च, घर्णसिर्लोकपाल इति व्याख्यातम् । युक्तं चैतत्, ' घर्णसिं भूरिधायसम् ' इत्यादि मन्त्रानुगुणत्वात् ॥ **पर्णसिरिति** । ' पॄ पालनपूरणयोः ' अस्मादसिप्रत्ययो नुक् च ॥ **तण्डुला इति** । उलच् प्रत्ययो

आकि लक्षणे उशच्।अङ्कुशः। चषेरालः । चपालो यूपकटकः।इल्वलो दैत्यभेदः।पल्वलम् । जिष्णा-। ऋकारस्य इकारः । धिष्ण्यम् । शलेर्यः । शल्यं वा पुंसि शङ्कुर्ना ॥ (उ०) **मूशक्यविभ्यः क्लः** ॥ मूलम् । शक्लः प्रियंवदे । अम्लो रसः । बाहुलकादमेः । अम्लः ॥ (उ०) **माछाससिभ्यो यः** ॥ माया । छाया । सस्यम् । बाहुलकात्सुनोतेः । सव्यं दक्षिणवामयोः ॥ (उ०) **जनेर्यक्** ॥ ये विभाषा। जन्यं युद्धम् । जाया भार्या ॥ (उ०) **अघ्न्यादयश्च**॥ यगन्ता निपात्यन्ते । हन्तेर्यक् अडागम उपधालोपश्च । अघ्न्यः प्रजापतिः । अघ्न्या माहेयी । कनी दीप्तौ । कन्या । बवयोरैक्यम् । वन्ध्या ॥ (उ०) **स्नामदिपद्यर्त्तिपॄशकिभ्यो वनिप्** ॥ स्नावा रसिकः । मद्वा शिवः । पद्वा पन्थाः । अर्वा तुरङ्गगर्ह्ययोः । पर्वा ग्रन्थिः प्रस्तावश्च । शक्वा हस्ती । ङीब्रौ । शक्वरी अङ्गुलिः ॥ (उ०) **शीङ्क्रुशिरुहिजिक्षिसृधृभ्यः क्वनिप्** ॥ शीवा अजगरः । क्रुश्वा सृगालः । रुह्वा वृक्षः । जित्वा जेता । क्षित्वा वायुः । सृत्वा प्रजापतिः । धृत्वा विष्णुः ॥ (उ०) **ध्याप्योः संप्रसारणं च** ॥ धीवा कर्मकरः । पीवा स्थूलः ॥ (उ०) **अदेर्ध च** ॥ अध्वा ॥ (उ०) **प्र ईरशदोस्तुट्च** ॥ प्रेत्वा प्रशत्वा च सागरः । प्रेत्वरी प्रशत्वरी च नदी ॥ (उ०) **सर्वधातुभ्य इन्**॥

---

जुमागमश्च धातोः । 'त्रेधा तण्डुलान्विभजेत्' इह चित्स्वरः । '**तण्डुलः** स्याद्विडङ्गे च धान्यादिनिकरे पुमान्' इति मेदिनी ॥ **अङ्कुश इति** । अयमपि चित्स्वरेणान्तोदात्तः । तथा मन्त्रः-'दीर्घं ह्यङ्कुशं पथा' इति । 'अङ्कुशोऽस्त्री सृणिः स्त्रियाम्' इत्यमरः ॥ **चषेराल इति** । 'चष भक्षणे' 'प्रत्ययस्वरेणाद्युदात्तः । उज्ज्वलदत्तस्तु आलजिति चितमाह । तन्न, 'चषालं ये अश्वयूपाय तक्षति' । 'चषालवन्तः स्वरवः पृथिव्याम्' इत्यादौ चित्स्वरादर्शनात् ॥ अमरोक्तिमाह-**चषाल इति** । **इल्वल इति** । 'इल स्वप्नप्रेरणयोः' वलच्, गुणाभावः । '**इल्वला** तारका राजभेदे ना दैत्यमत्स्ययोः' इति मेदिनी । '**इल्वला**स्तच्छिरोदेशे तारका निवसन्ति याः' इत्यमरः । 'पा पाने' अस्माद्वलच्, लुगागमः, ह्रस्वत्वं च । पिबत्यस्मिन्निति पल्वलमल्पसरः ॥ **इकार इति** । रपरत्वाभावो ण्यप्रत्ययश्चेति बोध्यम् । 'धिष्ण्यं स्थाने गृहे भेऽग्नौ' इत्यमरः । '**धिष्ण्यं** स्थानाग्निसद्मसु । ऋक्षे शक्तौ च' इति मेदिनी ॥ **शलेः**-। 'शल गतौ' । 'शल्यं तु न स्त्रियां शङ्कौ क्लीबं क्ष्वेडेषुतोमरे । मदनद्रुश्वाविधोर्ना' इति मेदिनी ॥ **मूशकि**-। 'मूङ् बन्धने', 'शक्लृ शक्तौ', 'अवि शब्दे' । 'मूलं शिफाद्ययोः । मूलं वित्तेऽन्तिके' इति मेदिनी । 'शक्लः प्रियंवदे' इति विशेष्यनिघ्नोऽमरः । 'अम रोगे' चुरादिण्यन्तः । बाहुलकादेवोपधाह्रस्वः । '**अम्ला** रसविशेषे स्यादम्ला चाङ्गेरिकोषधौ' इति मेदिनी ॥ **माछा**-। 'मा माने', 'छो छेदने', 'षस स्वप्ने' । '**माया** स्याच्छाम्बरीबुद्ध्योर्मायः पीताम्बरेऽसुरे' इति मेदिनी ॥ '**छाया** स्यादातपाभावे प्रतिबिम्बार्कयोषितोः । पालनोत्कोचयोः कान्तिसच्छोभापङ्क्तिषु स्त्रियाम्' इति विश्वमेदिन्यौ । 'वृक्षादीनां फलं **सस्यम्**' इत्यमरः ॥ **सुनोतेरिति** । 'षुञ् अभिषवे' । '**सव्यं** वामे प्रतीपे च' इति मेदिनी ॥ **जनेः**-। 'जन जनने' यकः कित्त्वमुत्तरार्थम् । '**जन्यं** हट्टपरीवादे सङ्ग्रामे च नपुंसकम् । **जन्या** मातृवयस्यायां **जन्यः** स्याज्जनके पुमान् । त्रिषूत्पाद्यजनित्रोश्च नवोढाज्ञातिभृत्ययोः । स्निग्धे' इति मेदिनी ॥ आत्त्वपक्षे रूपमाह-**जायेति** । **अघ्न्यादयश्च** । **अघ्न्य इति** । यकः कित्वात् 'गमहन-' इत्युपधालोपे 'हो हन्तेः-' इति कुत्वेन हस्य घः । अडागममनुक्त्वा नञ्पूर्वाद्धन्तेर्यगित्यन्ये ॥ **अघ्न्येति** । स्त्रियां टाप् । 'माहेयी सौरभेयी गौरुस्रा माता च शृङ्गिणी । अर्जुन्यघ्न्या रोहिणी स्यात्' इत्यमरः । सम्पूर्वाद्धाञो यक् आतो लोपश्च । 'सन्ध्या पितृप्रसूनद्यन्तरयोर्युगसन्धिषु' इति मेदिनी । '**कन्या** कुमारिकागौर्योरोषधीराशिभेदयोः' इति विश्वमेदिन्यौ ॥ **वन्ध्येति** । 'वन्ध बन्धने' । 'वन्ध्यस्त्वफलवृक्षादौ स्त्रियां स्यादप्रजस्त्रियाम्' इति मेदिनी । कौतेर्येति डक् । कुड्यमित्युज्ज्वलदत्तः । 'यतोऽनावः' इत्याद्युदात्तः । ड्यक्प्रत्ययान्तोयमन्तो दात्त इत्यन्ये-इति 'निवाते वातत्राणे' इति सूत्रे वृत्तिः। डित्त्वाट्टिलोपे सति कित्करणं व्यर्थं स्यादिति गुणप्रतिषेधार्थात्ककाराद्धकारस्येत्त्वं नेति तत्रैव हरदत्तः । एवं स्थितेऽघ्न्यादयो यगन्ता इति प्रायोवादः ॥ **स्नामदि**-। 'ष्णा शौचे', 'मदी हर्षे', 'पद गतौ', 'ऋ गतौ', 'पॄ पालनपूरणयोः', 'शक्लृ शक्तौ' । '**अर्वा** तुरङ्गमे पुंसि कुत्सिते वाच्यलिङ्गकः' इति मेदिनी । 'पर्व क्लीबं सहे ग्रन्थे प्रस्तावे लक्षणान्तरे । दर्शप्रतिपदोः सन्धौ विषुवत्प्रभृतिष्वपि' इति च ॥ **ङीब्राविति** । 'वनोर च' इत्यनेन ॥ **अङ्गुलिरिति** । एतच्च 'आरोहतं दशतं शक्वरीर्मम' इत्यादिमन्त्रव्याख्यायां स्पष्टम् । '**शक्वरी** छन्दसो भेदे नदीमेखलयोरपि' इति मेदिनी ॥ **शीङ्**-। 'शीङ् स्वप्ने', 'क्रुश आह्वाने रोदने च', 'रुह बीजजन्मनि प्रादुर्भावे च', 'जि जये', 'क्षि निवासगत्योः', 'सृ गतौ', 'धृ धारणे' ॥ **ध्याप्योः** । 'ध्यै चिन्तायाम्', 'प्यैङ् वृद्धौ', आभ्यां क्वनिप्स्यात्संप्रसारणं च । धातोः 'हलः' इति दीर्घः ॥ **अदेः**-। 'अद भक्षणे' अस्मात्क्वनिप् धकारश्चान्तादेशः । अध्वा मार्गः ॥ **प्र ईर**-। 'ईर गतौ', 'शद्लृ शातने' आभ्यां प्रपूर्वाभ्यां क्वनिप्स्यात्तस्य तुडागमश्च ॥ **प्रेत्वरीति** । स्त्रियाम्-'वनो र च' इति ङीब्रौ ॥ **सर्व**-

पचिरग्निः । तुडिः । तुण्डिः । वलिः । वटिः । यजिः । देवयजिः । काशत इति काशिः । यतिः । मल्लिः । मल्ली । केलिः । मसी परिणामे । मसिः । बाहुलकाद् गुणः । कोटिः । हेलिः । बोधिः । नन्दिः । कलिः ॥ ⚙ ह्रपिषिरुहिवृतिविदिच्छिदिकीर्तिभ्यश्च ॥ हरिर्विष्णावहाविन्द्रे भेके सिंहे हये रवौ । चन्द्रे कीले प्लवङ्गे च यमे वाते च कीर्तितः ॥ पेषिर्वज्रम् । रोहिर्व्रीती । वर्तिः । वेदिः । छेदिश्छेत्ता । कीर्तिः ॥ ⚙ इगुपधात्कित् ॥ कृषिः । ऋषिः । शुचिः । लिपिः । बाहुलकाद्दत्वे लिबिः । तूल निष्कर्षे । तूलिः, तूली कूर्चिका ॥ ⚙ भ्रमेः संप्रसारणं च ॥ भृमिर्वातः । बाहुलकाद् भ्रमिः ॥ ⚙ क्रमितमिशतिस्तम्भामत इच्च ॥ क्रिमिः । संप्रसारणानुवृत्तेः कृमिरपि । तिमिर्मत्स्यभेदः । शितिर्मेचकशुक्लयोः । स्तिम्भिः समुद्रः ॥ ⚙ मनेरुच्च ॥ मुनिः ॥ ⚙ वर्णेर्वलिश्चाहिरण्ये ॥ वर्णिः सौत्रः । अस्य व्रलिरादेशः । करोपहारयोः पुंसि बलिः प्राण्यङ्गके स्त्रियाम् । हिरण्ये तु वर्णिः सुवर्णम् ॥ ⚙ वसिवपियजिराजिव्रजिसदिहनिवाशिवादिवारिभ्य इञ् ॥ वासिश्छेदनवस्तुनि । वापिः ।

---

धातुभ्य इन् । 'डुपचष् पाके', 'तुडि तोडने' तोडनं दारणं हिंसनं च, 'वल संवरणे', 'वट वष्टने,' 'यज देवपूजादौ', 'काशृ दीप्तौ', 'यती प्रयत्ने' । 'यतिः स्त्री पाठविच्छेदे निकारयतिनोः पुमान्' इति मेदिनी । 'मल मल्ल धारणे', 'केलृ चलने' भ्वादिः, 'केला विलासे' कण्ड्वादिः, 'किल शैत्यक्रीडनयोः' तुदादिः, 'कुट कौटिल्ये', 'हिल भावकरणे', 'बुध अवगमने', 'टुनदि समृद्धौ', 'कल शब्दसंख्यानयोः' ॥ 'गाङ्कुटादिभ्यः—' इति ङित्त्वाद् गुणाभावमाशङ्क्याह-बाहुलकादिति । 'कोटिः स्त्री धनुषोऽग्रेऽश्रौ संख्याभेदप्रकर्षयोः' इति मेदिनी । 'बोधिः पुंसि समाधेश्च भेदे पिप्पलपादपे' इति च । 'नन्दिर्द्यूताङ्ग आनन्देऽस्त्री नन्दिकेश्वरे पुमान्' इति च । इह 'इन् इत्येव' सूत्रं 'सर्वधातुभ्यः' इति तु प्रक्षिप्तं व्यर्थं च । एवं 'सर्वधातुभ्यष्ट्रन्' इत्यादावपि बोध्यमित्याहुः ॥ ह्रपिषि— । 'हृञ् हरणे', 'पिष्लृ संचूर्णने', 'रुह बीजजन्मनि प्रादुर्भावे च', 'वृतु वर्तने' । वर्तिर्दीपोपकरणम् । 'विद सत्तायाम्' विद्यते पुण्यमस्यामिति वेदिः परिष्कृता भूमिः । 'छिदिर् द्वैधीकरणे', 'कृत संशब्दने' । हरतेः कीर्तयतेश्च 'अच इः' इति प्राप्ते इतरेषां तु 'इगुपधात्—' इति कप्रत्यये प्राप्ते वचनमिदम् । 'यमानिलेन्द्रचन्द्रार्कविष्णुसिंहांशुवाजिषु । शुकाहिकपिभेकेषु हरिर्ना कपिले त्रिषु' इत्यमरः । 'वर्तिर्भेषजनिर्माणे नयनाञ्जनलेखयोः । गात्रानुलेपनीदीपदशादीपेषु योषिति' इति मेदिनी । 'वेदिः स्यान्मण्डले पुमान् । स्त्रियामङ्गुलिमुद्रायां स्यात्परिष्कृतभूतले' इति च । 'कीर्तिः प्रसादयशसोर्विकारे कर्दमेऽपि च' इति विश्वः ॥ इगुपधात्— । 'कृष विलेखने', 'ऋषी गतौ', 'शुच शोके', 'लिप उपदेहे' इत्यादेरिगुपधाद्धातोरिन्स्यात्स च कित् । केचित्तु 'इगुपधात्किः' इति पठित्वा इनोऽपवादः किप्रत्यय इति व्याचख्युः । तन्न, प्रत्ययस्वरेण कृष्यादीनामन्तोदात्ततापत्तेः । न चेष्टापत्तिः, 'अग्निः पूर्वेभिर्ऋषिभिः', ऋषिर्विप्रः शुचिः कविः' इत्यादौ ऋषिशुचिप्रभृतीनामाद्युदात्तत्वदर्शनात् । 'न चैवम् 'अक्षैर्मा दीव्यः कृषिमित् कृषस्व' इत्यादौ कृषिशब्दस्यान्तोदात्तता न सिध्येदिति वाच्यम्, 'इकृष्यादिभ्यः' इतीकप्रत्यये सत्यन्तोदात्तत्वसिद्धेः । 'ऋषिर्वेदे वसिष्ठादौ दीधितौ च पुमानयम्' इति मेदिनी । 'शुचिर्ग्रीष्माग्निशृङ्गारेष्वाषाढे शुद्धमन्त्रिणि' इति च ॥ भ्रमेः । 'भ्रमु अनवस्थाने' अस्मादिन्स्यात्स च कित् संप्रसारणं च । 'भृमिं विपथावसवो पुषन्ति' इति मन्त्रे भृमिं भ्रमणशीलं दरिद्रजनमिति वेदभाष्यम् ॥ क्रमि— । 'क्रमु पादविक्षेपे', 'तमु काङ्क्षायाम्', शतिस्तम्भौ सौत्रौ, एभ्य इन्स्यात्स च कित्, एषामत इकारादेशश्च । क्रिमिः क्षुद्रजन्तुः । 'कृमिर्ना क्रिमिवत्कीटे लाक्षायां क्रिमिले खरे' इति विश्वमेदिन्यौ । 'पारतं पारदं वाल्लो वासरः क्रिमिवत्कृमिः, इति द्विरूपकोशः ॥ तिमिरिति । 'अस्ति मत्स्यस्तिमिर्नाम तथा चास्ति तिमिङ्गिलः । तिमिङ्गिलगिलोऽप्यस्ति तद्गिलोऽप्यस्ति लक्ष्मण' इति रामायणे सप्तमे काण्डे रामवाक्यम् । केचित्तु 'तद्गिलोऽप्यस्ति राघव' इति पठित्वा राघवं प्रति लक्ष्मणवाक्यमित्याहुः । 'शितिः कृष्णे सिते भूर्जे' इति विश्वः । 'शितिर्भूर्जे ना सितासितयोस्त्रिषु' इति मेदिनी ॥ मनेः— । 'मन ज्ञाने' अस्मादिन्स्यात्स च किद्, अकारस्योकारादेशश्च स्यात् । मन्यते जानातीति मुनिः । 'मुनिः पुमान्वसिष्ठादौ वङ्गसेनतरौ जिने' इति मेदिनी ॥ वर्णेः— । अस्मादिन्स्यात्स च कित् ॥ वसि— । 'वस निवासे', 'डुवप् बीजसन्ताने', 'यज देवपूजादौ', 'राजृ दीप्तौ', 'व्रज गतौ', 'षद्लृ विशरणादौ', 'हन हिंसागत्योः', 'वाशृ शब्दे', 'वद व्यक्तायां वाचि' ण्यन्तः, 'वृञ् वरणे' ण्यन्तः ॥ वासिरिति । दन्त्यसकारवान् । सूत्रेऽष्टमस्तु तालव्यशकारवान् । 'वास्यादीनामिव करणानां कर्तृव्यापार्यत्वनियमात्' इति वैशेषिकाः । 'वास्यर्थमित्यत्र 'स्कोः—' इति सलोपः प्राप्नोति' इति भाष्यम् । वापिरुदकाधारः । वापी प्रसिद्धा । 'राजिः स्त्री पङ्क्तिरेखयोः' इति मेदिनी । इह वादीति ण्यन्तनिर्देशेऽपि बाहुलकादण्यन्तादपि इञ् । तथा च 'भूवादि—' सूत्रे 'वदन्तीति वादयो वाचकाः' इति न्यासकारादयः । 'वारिः स्मृता सरस्वत्यां वारि ह्रीवेरनीरयोः । वारी घटीभवन्धन्योः' इति विश्वः ।

---



१ 'कित्त्वे प्राप्ते' इति मनोरमैव समीचीना ॥

पापी । याजिर्यष्टा । राजिः । राजी । व्राजिर्वातालिः । सादिः सारथिः । निवातिर्लोहव्रातिनी । वाशिरग्निः । वादिर्विद्वान् । वारिर्गजबन्धनी । जले तु क्लीबम् । बाहुलकाद्धारिः पथिक/संहतौ ॥ (उ) नहो भश्च ॥ नाभिः स्यात्क्ष-त्रिये पुंसि । प्राण्यङ्गे तु स्त्रियां पुंस्यपीति केचित् ॥ (उ) कृषेर्वृद्धिश्छन्दसि ॥ कार्षिः ॥ (उ) शृः शकुनौ ॥ शारिः । शारिका ॥ (उ) कृञ उदीचां कारुषु ॥ कारिः शिल्पी ॥ (उ) जनिघसिभ्यामिण् ॥ जनिर्जननम् । घासिर्भक्ष्यमग्निश्च ॥ (उ) अज्यतिभ्यां च ॥ आजिः संग्रामः । आतिः पक्षी ॥ (उ) पादे च ॥ पदाजिः । पदातिः ॥ (उ) अशिपणाय्योरुडायलुकौ च ॥ अशेरुट् । राशिः पुञ्जः । पणायतेरायलुक् । पाणिः करः ॥ (उ) वातेर्डिच्च ॥ विः पक्षी । स्त्रियां वीत्यपि ॥ (उ) प्रे हरतेः कूपे ॥ प्रहिः कूपः ॥ (उ) नौ व्यो यलोपः पूर्वस्य च दीर्घः ॥ व्येञ इण् स्याद् यलोपश्च नेर्दीर्घः । नीविः । नीवी वस्त्रग्रन्थौ मूलधने च ॥ (उ) समाने ख्यः स चोदात्तः ॥ समानशब्दे उपपदे ख्या इत्यस्मादिण् स्यात्स च डित् यलोपश्च समानस्य तूदात्तः स इत्यादेशश्च । समानं ख्यायते जनैरिति सखा ॥ (उ) आङि श्रिहनिभ्यां ह्रस्वश्च ॥ इण् स्यात्स च डित् आङो ह्रस्वश्च । स्त्रियः पाल्यश्रिकोटयः । सर्पे वृत्रासुरेऽप्यहिः ॥ (उ) अच इः ॥ रविः । पविः । तरिः । कविः । अरिः । आलिः ॥ (उ) खनिकष्यज्यसिवसिवनिसनिध्वनिग्रन्थिचलिभ्यश्च ॥ खनिः । कषिर्हिंस्रः । अजिः । असिः । वसिर्व-

---

'हृञ् हरणे' अस्मादिञ् । 'हारिः पथिकसन्तानद्यूतादिभङ्गयोः स्त्रियाम्' इति मेदिनी ॥ नहः-। 'णह बन्धने' अस्मादिञ् स्यात् भश्चान्तादेशः ॥ स्त्रियामिति । लिङ्गानुशासने 'स्त्रियाम्' इत्यधिकारे 'नाभिरक्षत्रिये' इति सूत्रितत्वादिति भावः ॥ पुंस्यपीति । तथा च मेदिनी 'नाभिर्मुख्यनृपे चक्रमध्यक्षत्रिययोः पुमान् । द्वयोः प्राणिप्रतीके स्यात्त्रिषु कस्तूरिकामदे' इति । भारविश्च पुंसि प्रायुङ्क्त-'समुच्छ्वसत्पङ्कजकोशकोमलैरुपाहितश्रीण्युपनीविनाभिभिः' इति ॥ कृषेः-। 'कृष विलेखने' इत्यस्मादिञ्, वृद्धिश्च । 'इको गुणवृद्धी' इतीकः स्थाने एव वृद्धिरित्युदाहरति-कार्षिरिति ॥ भाषायां तु कृषिरित्येव ॥ शृः-। 'शॄ हिंसायाम्' अस्माच्छकुनौ वाच्ये इञ् स्यात् । 'शारिर्नाऽक्षोपकरणे स्त्रियां शकुनिकान्तरे । युद्धार्थगजपर्याणे व्यवहारान्तरेऽपि च' इति मेदिनी । कपिलकादित्वाल्लत्वम् । 'शालिस्तु कलमादौ च गन्धमार्जारके पुमान्' इति मेदिनी ॥ जनि-। 'जनी प्रादुर्भावे' 'घस्लृ अदने' आभ्यामिण् । 'जनिवध्योश्च' इतीणि वृद्धिप्रतिषेधः ॥ जनिरिति । स्त्रीलिङ्गम् । 'कृदिकारात्-' इति पक्षे ङीष् । 'जनी सीमन्तिनीवध्वोरुत्पत्तावौषधीभिदि' इति मेदिनी ॥ अजि-। 'अज गतिक्षेपणयोः', 'अत सातत्यगमने' । बाहुलकादजेर्वीभावो न ॥ पादे-। पादोपपदे अज्यतिभ्यामिण् । 'पादस्य पदाज्यातिगोपहतेषु' इति पदादेशः । पदाजिः पादचारी । 'पदातिपत्तिपदगपादातिकपदाजयः । पद्गश्च पथिकश्च' इत्यमरः ॥ अशिपणाय्योः-। अशिश्च पणायिश्च अशिपणायी तयोरिति विग्रहः । 'अशू व्याप्तौ', 'पण व्यवहारे' आयप्रत्ययान्तः, आभ्यामिण् स्यादनयोर्यथाक्रमं रुडायप्रत्ययलुकौ च भवतः । 'राशिर्मेषादिपुञ्जयोः' इति मेदिनी ॥ वातेः-। 'वा गतिगन्धनयोः' अस्मादिण् स्यात् डित्त्वाट्टिलोपः ॥ प्रे-। प्रपूर्वाद्धरतेः कूपे वाच्ये इण् । 'पुंस्येवान्धुः प्रहिः कूप उदपानं तु पुंसि वा' इत्यमरः ॥ नौ-। 'व्येञ् संवरणे' । 'स्त्रीकटीवस्त्रबन्धेऽपि नीवी परिपणेऽपि च' इत्यमरः । परिपणो मूलधनम् ॥ समाने-। 'ख्या प्रकथने' ॥ इण् स्यादिति । यत्तूज्ज्वलदत्तेनोक्तमिञ् स्यात्स चोदात्त इति । तन्न, संनिहितेन 'जनिघसिभ्यामिण्' इत्यनेन 'वसिवपि-' इत्यादिना विहितस्यञो विच्छन्नत्वात् । यदपि तेनैव 'नौ व्य-' इति पूर्वसूत्रे उक्तमित्राऽनुवर्तते न त्विण्, उत्तरसूत्रे उदात्तवचनाज्ज्ञापकादिति । तदपि न, स चोदात्त इति हि नायं धातोः परत्र विहितं प्रत्ययं निर्देष्टुं तच्छब्दः, किन्तु समानशब्दस्य स्थाने विधीयमानमादेशं निर्देष्टुं शब्दस्वरूपपरः । तथा च कथं ज्ञापकता स्यात् । यदपि स इञ् उदात्त इति व्याख्याय समानस्य सभाव इति प्रक्रियास्मरणमात्रं कृतम् । तदपि न, सभावविधायकस्याभावात् । यदपि स्वरमञ्जरीकारादिभिरुक्तं 'समानस्य च्छन्दसि-' इति सूत्रेण सभाव इति । तदपि न, लोके सखिशब्दस्यासाधुत्वापत्तेः । अपि च 'सखायमब्रवीत्', 'सखायस्त्वा ववृमहे', 'सखा सखिभ्य ईड्यः' इत्यादिमन्त्रेषु सर्वत्र सखिशब्द आद्युदात्त एवेति निर्विवादम् । एवं च इञुदात्त इत्युज्ज्वलदत्तादिव्याख्यानं वेदवार्तानभिज्ञत्वप्रयुक्तमेवेति दिक् ॥ आङि-। 'श्रिञ् सेवायाम्', 'हन हिंसागत्योः' अमरोक्तिमाह—स्त्रिय इति । एवं च 'सुप्रातसुश्व-' इति सूत्रे चतुरश्रेति तालव्यपाठः संगच्छत एव । तत्सूत्रे दन्त्यपाठस्त्वेतत्सूत्रापर्यालोचनामूलक एवेत्यवधेयम् । नन्वेवं चतुरस्रमिति दन्त्यप्रयोगस्य कथं निर्वाह इति चेत् । अत्राहुः-अकारान्तेन दन्त्यगर्भिणाऽस्रशब्देन विग्रहे तत्प्रयोगः । न च तादृशे शब्दे विप्रतिपत्तव्यम्, 'अस्रः कोणे कचे पुंसि क्लीबमश्रुणि शोणिते' इति मेदिनीकोशादिति । 'अहिर्वृत्रासुरे सर्पे' इति मेदिनी ॥ अच इः । अजन्ताद्धातोरिः स्यात् । 'रु शब्दे' । 'पूञ् पवने' पविर्वज्रम् । 'तॄ प्लवनतरणयोः' । तरिर्वस्त्रादिस्थापनभाण्डम् । 'स्त्रियां नौस्तरणिस्तरिः' इत्यमरः । 'कु शब्दे' कविर्वाल्मीकिकाव्ययोः सूरौ काव्यकरे पुंसि स्यात्खलीने तु योषिति' इति मेदिनी । 'ऋ गतौ' । अरिः शत्रुः । कपिलकादित्वाद्वैकल्पिकलत्वम् । अलिर्भ्रमरः ॥ खनि-। 'खनु अवदारणे', 'कष खष-' इति दण्डको

त्वम् । वनिरग्निः । सनिर्भक्तिर्दानं च । ध्वनिः । ग्रन्थिः । चलिः पशुः ॥ (उ.) वृतेश्छन्दसि ॥ वर्तिः ॥ (उ.) भुजेः किच्च ॥ भुजिः ॥ (उ.) कॄगॄशॄपॄकुटिभिदिच्छिदिभ्यश्च ॥ इः कित्स्यात् । किरिर्वराहः । गिरिर्गोत्राक्षिरोगयोः । गिरिणा काणः गिरिकाणः । शिरिः शलभो हन्ता च । पुरिर्नगरं राजा नदी च । कुटिः शाला शरीरं च । भिदिर्वज्रम् । छिदिः परशुः ॥ (उ.) कुडिकम्प्योर्नलोपश्च ॥ कुडि दाहे । कुडिर्देहः । कपिः ॥ (उ.) सर्वधातुभ्यो मनिन् ॥ क्रियत इति कर्म । चर्म । भस्म । जन्म । शर्म । स्थाम बलम् । इस्मिन्निति ह्रस्वः। छद्म । सुत्रामा॥ (उ.) बृंहेर्नोऽच्च ॥ नकारस्याकारः ।ब्रह्म तत्त्वं तपो वेदो ब्रह्मा विप्रः प्रजापतिः ॥ (उ.) अशिशकिभ्यां छन्दसि ॥ अश्मा । शक्मा ॥ (उ.) हृभृधृसृस्तृशॄभ्य इमनिच् ॥ हरिमा कालः । भरिमा कुटुम्बम् । धरिमा रूपम् । सरिमा वायुः । स्तरिमा तल्पम् । शरिमा प्रसवः ॥ (उ.) जनिमृङ्भ्यामिमनिन् ॥ जनिमा जन्म । मरिमा मृत्युः ॥ (उ.) वेञः सर्वत्र॥ छन्दसि भाषायां चेत्यर्थः । वेमा तन्तुवायदण्डः । अर्धर्चादिः । सामनी वेमनी इति वृत्तिः ॥ (उ.) नामन् सीमन् व्योमन् रोमन् लोमन् पाप्मन् धामन् ॥ सप्त अमी निपात्यन्ते । म्नायतेऽनेनेति नाम । सिनोतेर्दीर्घः । सीमा । सीमानौ । सीमानः । पक्षे डाप् । सीमे । सीमाः । व्येञोऽन्त्यस्योत्वं गुणः । व्योम । रौतेः रोम । लोम । पाप्मा पापम् । धाम परिमाणं तेजश्च ॥ (उ.) मिथुने मनिः ॥ उपसर्गक्रियासंबन्धो मिथुनम् । स्वरार्थमिदम् । सुशर्मा॥

---

हिंसार्थकः, 'अज गतिक्षेपणयोः', 'असु क्षेपणे', 'वस आच्छादने,' 'वन षण सम्भक्तौ', 'वनु याचने', 'षणु दाने', 'ध्वन शब्दे', 'ग्रन्थ बन्धने' उभौ चुरादी, 'चल कम्पने' एभ्य इः स्यात् । 'खनिः स्त्रियामाकरः स्यात्' इत्यमरः । ण्यन्तात् 'अच इः' इति इप्रत्यये खानिरपि । 'खनिरेव मता खानिः' इति द्विरूपकोशः । 'ग्रन्थिस्तु ग्रन्थिपर्णे ना बन्धे रुग्भेदपर्वणोः' इति मेदिनी । 'ग्रन्थिर्ना पर्वपरुषी' इत्यमरः ॥ वनिरग्निरिति । 'वनु याचने' इत्यस्मादिप्रत्यये वनिर्याच्ञा इत्याहुः ॥ चलिः पशुरिति । 'चरिभ्यश्च' इति पाठान्तरम् । 'चर गतौ' चरतिर्भक्षणेऽपि, चरिः पशुः ॥ वृतेः–। 'वृतु वर्तने' अस्मादिः स्यात्। वाहुलकाल्लोकेऽपि 'साज्यं त्रिवर्तिसंयुक्तम्' इति प्रयोगः। 'वर्तिर्भेषजनिर्माणे नयनाञ्जनलेखयोः । गात्रानुलेपनीदीपदशार्दीपेषु योषिति' इति मेदिनी ॥ भुजेः–। 'भुज पालनाभ्यवहारयोः' अस्मादिः स्यात्स कित् । भुजिरग्निः ॥ कॄगॄशॄ–। 'कॄ विक्षेपे', 'गॄ निगरणे', 'शॄ हिंसायाम्', 'पॄ पालनपूरणयोः' 'कुट कौटिल्ये', 'भिदिर् विदारणे', 'छिदिर् द्वैधीकरणे' । 'वराहः सूकरो घृष्टिः कोलः पोत्री किरिः किटिः' इत्यमरः । 'इगुपधज्ञाप्रीकिरः–' इति कप्रत्यये किर इत्यकारान्तोऽपि । 'त्वचि त्वचः किरोऽपि स्यात् किरौ प्रोक्तः पथः पथि' । इति द्विरूपकोशः । 'गिरिर्ना नेत्ररुग्भिदि । अद्रौ गिरिजके योषिद्गीर्णौ पूज्ये पुनस्त्रिषु' इति ॥ कुटिरिति । ङीषि तु कुटी । 'कुटीशमीशुण्डाभ्यो रः' । कुटीरः । 'कुटिः कीटे पुमानस्त्री घटे स्त्रीपुंसयोर्गृहे । कुटी स्यात्कुम्भदास्यां च सुरायां चित्रगुच्छके' इति मेदिनी ॥ कुडि–। 'कुडि दाहे', 'कपि चलने' आभ्यामिः कित्स्याद्धातोर्नलोपश्च । 'कपिर्ना सिह्लके शाखामृगे च मधुसूदने' इति च ॥ सर्वधातुभ्यः–। 'डुकृञ् करणे', चर गतौ' चरतिर्भक्षणेऽपि 'जन जनने', 'भस भर्त्सनदीप्त्योः' 'शॄ हिंसायाम्' शर्म सुखे । 'ष्ठा गतिनिवृत्तौ', 'छद अपवारणे' चुरादिः । 'त्रैङ् पालने' । सुष्ठु त्रायते इति सुत्रामा इन्द्रः । कर्म व्याप्ये क्रियायाञ्च पुंनपुंसकयोर्मतम्' इति रुद्रः । चर्म कृत्तौ च फलके' इति मेदिनी ॥ बृंहेः–। 'बृहि वृद्धौ' अस्मान्मनिन्नुमो नस्याकारे ऋकारस्य यणादेशः । 'ब्रह्म तत्त्वं तपो वेदे न द्वयोः पुंसि वेधसि । ऋत्विग्योगभिदोर्विप्रे' इति मेदिनी ॥ अशि–। 'अशू व्याप्तौ संघाते च' । 'शक्लृ शक्तौ' शक्मा इन्द्रः । छन्दसीत्यस्य शकिना संबन्धो न त्वशिना । अत एव 'अश्मानमारोपयतः स्मरारेः' इति प्रयोगः । 'हृञ् हरणे', 'डुभृञ् धारणपोषणयोः', 'धृ धारणे', 'सृ गतौ', 'स्तृञ् आच्छादने', 'शॄ हिंसायाम्' ॥ शरिमेति । एतच्चोज्ज्वलदत्तरीत्योक्तम् । दशपाद्यां तु शृणातिर्न पठ्यते, तत्स्थाने सृधातुं प्रक्षिप्य प्रत्ययं च दीर्घादिं नितं च कृत्वा 'स्तृसृभ्यामीमन्' इति पठ्यते, छन्दोग्रहणं चानुवर्तितम् । युक्तं चैतत्, 'पिप्रताम्नो भरीमभिः' 'वातस्य सर्गोअभवत्सरीमणि', 'स्तीर्णे बर्हिसुष्टरीमा जुषाणा यस्या मतिर्भा अदिद्युतत्सवीमणिः' 'हिरण्यपाणिः' इत्यादिमन्त्राणां तद्भाष्यस्य चानुगुणत्वात् । उक्तप्रयोगाणां भाषायामदर्शनेन च्छन्दोऽनुवृत्तेर्न्याय्यत्वाच्च । अत एव 'वेञः सर्वत्र' इति सूत्रे सर्वत्रग्रहणं करिष्यति ॥ जनि–। 'जन जनने', 'मृङ् प्राणत्यागे' वेञः–। 'वेञ् तन्तुसन्ताने' ॥ निपात्यन्त इति । मनिन्नन्ता इति शेषः । 'म्ना अभ्यासे' मलोपो नाभावो वा । नाम संज्ञा । 'षिञ् बन्धने' 'सीमसीमे स्त्रियामुभे' इत्यमरः।'व्येञ् संवरणे'। रु शब्दे' रोम गात्रकेशः। 'लूञ् छेदने'।लोम स एव। 'पा पाने' पुगागमः । 'ध्यै चिन्तायाम्' । बाहुलकादन्येभ्योऽपि। 'यक्ष पूजायाम्'। 'क्षयः शोषश्च यक्ष्मा च' इत्यमरः । 'पॄ पूरणे' सामा [illegible] । 'धाम देहे गृहे रश्मौ स्थाने जन्मप्रभावयोः' इति मेदिनी ॥ मिथुने–। 'शॄ हिंसायाम्' । सुष्ठु शृणाति इति सुशर्मा राजविशेषः । कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तं पदम्, मनिनि तु मध्योदात्तं स्यात्॥

(उ) **सातिभ्याममनिन्मनिणौ** ॥ स्यति साम । सामनी । आत्मा ॥ (उ) **हनिमशिभ्यां सिकन्** ॥ हंसिका हंसयोषिति । मक्षिका ॥ (उ) **कोररन्** ॥ कवरः ॥ (उ) **गिर उडच्** ॥ गरुडः ॥ (उ) **इन्देः कमिर्नलोपश्च** ॥ इदम् ॥ (उ) **कायतेर्डिमिः** ॥ किम् ॥ (उ) **सर्वधातुभ्यः ष्ट्रन्** ॥ वस्त्रम् । अस्त्रम् । शस्त्रम् । इसन्निति ह्रस्वत्वम् । छादनाच्छत्रम् ॥ (उ) **भ्रस्जिगमिनमिहनिविश्यशां वृद्धिश्च** ॥ भ्राष्ट्रः । गात्रं शकटम् । नान्त्रं स्तोत्रम् । हान्त्रं मरणम् । वैष्ट्रं विष्टपम् । आष्ट्रमाकाशम् ॥ (उ) **दिवेर्द्युच्च** ॥ द्यौत्रं ज्योतिः ॥ (उ) **उषिखनिभ्यां कित्** ॥ उष्ट्रः । खात्रं खनित्रं जलाधारश्च ॥ (उ) **सिविमुच्योष्टेरू च** ॥ सूत्रम् । मूत्रम् ॥ (उ) **अमिचिमिदिशसिभ्यः क्त्रः** ॥ आन्त्रम् । चित्रम् । मित्त्रम् । शस्त्रम् ॥ (उ) **पुवो ह्रस्वश्च** ॥ पुत्रः ॥ (उ) **स्त्यायतेर्ड्रट्** ॥ स्त्री ॥ (उ) **गुधृवीपचिवचियमिसदिक्षदिभ्यस्त्रः** ॥ गोत्रं स्यान्नामवंशयोः । गोत्रा पृथिवी । धत्रं गृहम् । वेत्रम् । पक्त्रम् । वक्त्रम् । यन्त्रम् । सत्त्रम् । क्षत्त्रम् ॥ (उ) **हुयामाश्रुभसिभ्यस्त्रन्** । होत्रम् । यात्रा । मात्रा ।

---

**साति**—। 'षोऽन्तकर्मणि', 'अत सातत्यगमने' आभ्यां यथासंख्यमेतौ स्तः । स्यति दुःखयति दुरध्येयत्वात् साम । 'साम क्लीबमुपायस्य भेदे वेदान्तरेऽपि च' इति मेदिनी । 'आत्मा पुंसि स्वभावे स्यात्प्रयत्नमनसोरपि । धृतावपि मनीषायां शरीरब्रह्मणोरपि' इति च ॥ **हनि**—। 'हन हिंसागत्योः' मश शब्दे रोशकृते च'।'मक्षिका भम्भराली स्यात्' इति हारावली॥ **कोररन्**। 'कु शब्दे' कवरः पाठकः । वबयोरैक्यात्कवरी केशविन्यासः । 'जानपद—' इति ङीष् । अन्यत्र कवरा ॥ **गिरः**—। 'गॄ निगरणे' । केचित्तु सूत्रमिदं परित्यज्य गरुता डयत इति विगृह्य डीङो डप्रत्यये पृषोदरादित्वाद्रुतस्तकारलोपे गरुडशब्दं क्लेशेन व्युत्पादयन्ति ॥ **इन्देः**—। 'इदि परमैश्वर्ये' उज्ज्वलदत्तस्तु कमिन्निति नितं पपाठ । तच्चिन्त्यम्, 'इदं तत्पात्रमिन्द्रपानम्', 'इदं ते सोम्यं मधु' इत्यादौ नित्स्वराभावात् । दशपाद्यां तु 'इणो दमक्' इति सूत्रितम् ॥ **इदमिति** । सर्वनामशब्दोऽयं संनिहितपरामर्शी॥ **कायतेः**—। 'कै गै शब्दे' प्रयोजनाभावादेव मकारस्येत्संज्ञाविरहे सिद्धे डिमेरिकार उच्चारणार्थः । डकारस्तु टिलोपार्थः । दशपाद्यां तु मान्तमेव डिमिति सूत्रितम् ॥ **किमिति** सर्वनाम ॥ **सर्वधातुभ्यः**—। दशपाद्यां तु अर्थात्सर्वधातुभ्यो भविष्यतीत्याशयेन 'ष्ट्रन्' इत्येव सूत्रितम् । अत एवाधिकं प्रक्षिप्तमित्याहुः । 'वस निवासे', 'असु क्षेपणे', 'शसु हिंसायाम्', 'छद अपवारणे' ण्यन्तः । 'अस्त्रं प्रहरणे पापे करवाले नपुंसकम्' इति मेदिनी । 'पत्लृ गतौ' । 'पत्रं तु वाहने पर्णे स्यात् पक्षे शरपक्षिणोः' इति मेदिनी । 'पा पाने' । पात्रम् । षित्त्वान्ङीष् । पात्र्यमत्रे त्रिषु क्लीबं स्रुवादौ राजमन्त्रिणि । तीरद्वयान्तरे योग्ये' इति मेदिनी । 'दंश दशने' । 'व्रश्चादिना षत्वे ष्टुत्वे षितां ङीषोऽनित्यत्वाट्टाप् । दंष्ट्रा ॥ **भ्रस्जि**—। 'भ्रस्ज पाके', । 'गम्लृ गतौ', 'णम प्रह्वत्वे शब्दे च', 'हन हिंसागत्योः', 'विश प्रवेशने', 'अशू व्याप्तौ' एभ्यष्ट्रन् स्यादेषां वृद्धिश्च ॥ **भ्राष्ट्र इति** । संयोगादिलोपः । 'व्रश्च' इति षत्वे ष्टुत्वम् । 'क्लीबेऽम्बरीषं भ्राष्ट्रो ना' इत्यमरः । वैष्ट्रं विष्टपम् ॥ **दिवेः**—। 'दिवु क्रीडादौ' अस्मात् ष्ट्रन् स्यात् द्युादेशः वृद्धिश्च धातोः ॥ **उषिः**—। 'उष दाहे', 'खनु अवदारणे' आभ्यां ष्ट्रन् कित्स्यात् । उष्ट्रः क्रमेलकः । 'उष्ट्रे क्रमेलकमयमहाङ्गाः' इत्यमरः ॥ **सिवि**—। 'षिवु तन्तुसन्ताने', 'मुच्लृ मोक्षणे' आभ्यां ष्ट्रन्कित्स्यात् टेरूकारादेशश्च । सूत्रिमूत्रिभ्यां चुरादिण्यन्ताभ्यामेरचा रूपसिद्धेराद्युदात्तार्थमिदं सूत्रम् । न च घञा तत्सिद्धिः, 'एरच्' इत्यस्य घञो बाधकत्वात् । 'सूत्रं तु सूचनाग्रन्थे सूत्रतन्तुव्यवस्थयोः' इति विश्वः ॥ **अमि**—। 'अम गतिशब्दसंभक्तिषु', 'चिञ् चयने', 'ञिमिदा स्नेहने', 'शसु हिंसायाम्' । **आन्त्रमिति** । 'अनुनासिकस्य—' इति दीर्घः । 'श्रोणिलम्बिपुरुषान्त्रमेखलाम्' इति कालिदासः । 'आलेख्याश्चर्ययोश्चित्रम्' इत्यमरः । 'मित्रं सुहृदि न द्वयोः । सूर्ये पुंसि' इति मेदिनी । 'शस्त्रं लोहास्त्रयोः क्लीबं क्षुरिकायां तु योषिति' इति च । प्रत्ययस्वरेणैतेऽन्तोदात्ताः । 'शुन आन्त्राणि पेचे', 'चित्रं देवानाम्', 'मित्त्रं न यम्', 'शस्त्रस्य शस्त्रमसि' इत्यादि ॥ **पुवः**—। पूञ् पवने' अस्मात् क्त्रः स्यात् धातोर्ह्रस्वत्वं च । पुनाति स्ववंश्यानिति पुत्रः । पुन्नामा नरकस्तस्मात् त्रायते इत्यर्थे 'आतोऽनुपसर्गे कः' इति कप्रत्यये पुत्त्र इति व्युत्पत्त्यनन्तरम् ॥ **स्त्यायतेः**—। 'स्त्यै ष्ट्यै शब्दसंघातयोः' ॥ **स्त्रीति** । डित्त्वाट्टिलोपः । 'लोपो व्योः'— इति यलोपः । टित्त्वान्ङीप् । 'स्त्री योषिदबला योषा नारी सीमन्तिनी वधूः' इत्यमरः ॥ **गुधृ**—। 'गुङ् अव्यक्ते शब्दे', 'धृञ् धारणे', 'वी गतिप्रजननादौ', 'डुपचष् पाके', 'वच परिभाषणे', 'यम उपरमे', 'षद्लृ विशरणगत्यादौ', 'क्षद' इति सौत्रः । 'गोत्रा भूगव्ययोर्गोत्रः शैले गोत्रं कुलाख्ययोः । संभावनीयबोधे च काननक्षेत्रवर्त्मसु' इति मेदिनी । 'सत्त्रमाच्छादने यज्ञे सदादाने वनेऽपि च' इत्यमरः । 'सत्त्रं यज्ञसदादानच्छादनारण्यकैतवे' इति मेदिनी । क्षत्त्रं ब्राह्मणानन्तरजातिः ॥ **हुयामा**—। 'हु दानादनयोः', 'या प्रापणे', 'मा माने', 'श्रु श्रवणे', 'भस भर्त्सनदीप्त्योः' । होत्राशब्दं [illegible] इति '[illegible]' इति सूत्रे हरदत्तादयः । 'यात्रा तु पातनेऽपि स्यादुपायेऽवद्रमनोत्सवयोः स्त्रियाम्' इति मेदिनी । 'मात्रा कर्णविभूषायां वित्ते माने परिच्छदे । अक्षरावयवे स्वल्पे क्लीबं कार्त्स्न्येऽव-

श्रोत्रम् । भस्त्रा ॥ उ० गमेरा च ॥ गात्रम् ॥ उ० दादिभ्यश्छन्दसि ॥ दात्रम् । पात्रम् ॥ उ० भूवादिगृभ्यो णित्रन् ॥ भावित्रम् । वादित्रम् । गारित्रमोदनम् ॥ उ० चरेर्वृत्ते ॥ चारित्रम् ॥ उ० अशित्रादिभ्य इत्रोत्रौ ॥ अशित्रम् । वहित्रम् । धरित्री मही । त्रैङ्–एवमादिभ्य उत्रः । त्रोत्रं प्रहरणम् । वृत्र् । वरुत्रं प्रावरणम् ॥ उ० अमेर्द्विषति चित् ॥ अमित्रः शत्रुः ॥ उ० आ समिण्निकषिभ्याम् ॥ संपूर्वादिणो निपूर्वात्कषेश्च आ स्यात् । स्वरादित्वादव्ययत्वम् । समया । निकषा ॥ उ० चितेः कणः कश्च ॥ बाहुलकादगुणः । चिक्कणं मसृणं स्निग्धम् ॥ उ० सूचेः स्मन् ॥ सूक्ष्मम् ॥ उ० पातेर्डुम्सुन् ॥ पुमान् ॥ उ० रुचिभुजिभ्यां किष्यन् ॥ रुचिष्यमिष्टम् । भुजिष्यो दासः ॥ उ० वसेस्तिः ॥ बस्तिर्नाभेरधो द्वयोः । वस्तयः स्युर्दशासूत्रे । बाहुलकात् शासः । शास्तिः राजदण्डः । विन्ध्याख्यमगमस्यतीत्यगस्तिः । शकन्ध्वादिः ॥ उ० सावसेः ॥ स्वस्ति । स्वरादिपाठादव्ययत्वम् ॥ उ० वौ तसेः ॥ वितस्तिः ॥ उ० पदिप्रथिभ्यां नित् ॥ पत्तिः । प्रथितिः । तितुत्रेष्वग्रहादीनामितीट् ॥ उ० दृणातेर्ह्रस्वश्च ॥ दृतिः ॥ उ० कृतॄकृपिभ्यः कीटन् ॥ किरीटं शिरोवेष्टनम् । तिरीटं सुवर्णम् । कृपीटं कुक्षिवारिणोः ॥ उ० रुचिवचिकुचिकुटिभ्यः कितच् ॥ रुचितमिष्टम् । उचितम् । कुचितं परिमितम् । कुटितं कुटिलम् ॥ उ० कुटिकुषिभ्यां क्मलन् ॥ कुड्मलम् ।

---

धारणे ' इति च । ' कर्णशब्दग्रहौ श्रोत्रं श्रुतिः स्त्री श्रवणं श्रवः ' इत्यमरः । ' भस्त्रा चर्मप्रसेविका ' इति च ॥ गमेः–। ' गम्लृ गतौ ' अस्मात् त्रन्स्याद्धातोराकारान्तादेशश्च । ' गात्रमङ्गे कलेवरे । स्तम्बेरमाग्रजङ्घादिविभागेऽपि समीरितम् ' इति विश्वः ॥ दादिभ्यः—। ' दाप् लवने ' एवमादिभ्यस्त्रन् । दात्रं धान्यादिच्छेदनसाधनम् । ' पा पाने ' ' योग्यभाजनयोः पात्रम् ' इत्यमरः । ' क्षि निवासगत्योः ' । क्षेत्रमित्यादि योज्यम् ॥ भूवादि–। ' भु सत्तायाम् ' । भावित्रं त्रैलोक्यम् । ' वद व्यक्तायां वाचि ' ण्यन्तः । वादित्र तूर्यादि । ' गॄ निगरणे ' ॥ चरेः–। ' चर गतौ ' अस्माण्णित्रन्स्यात् वृत्ते वाच्ये । ' वृत्तं पद्ये चरित्रे च' इत्यमरः । ननु इत्रप्रत्यये चरित्रमित्युक्तं, ततश्च प्रज्ञाद्यणि चारित्रमिति सिद्धौ किमनेनेति चेत् । मैवम्, स्वरे विशेषात ॥ अशि–। ' अशू व्याप्तौ ' एवमादिभ्य इत्रः । ' त्रैङ् पालने ' एवमादिभ्य उत्रश्च स्यात् ॥ वहित्रमिति । ' वह प्रापणे ' ॥ धरित्रीति । ' धृञ् धारणे ' गौरादित्वात् ङीष् ॥ अमेः–। 'अम गतौ' अस्मादित्रः स्यात्स च चित् । उत्रस्तु नानुवर्तते, अस्वरितत्वात् । मित्रं नेति विग्रहे त्वमित्त्रमिति नपुंसकम् ॥ आ–। 'इण् गतौ' अस्मादाप्रत्यये गुणे समयादेशः ॥ कषेरिति—। 'कष खष–' इति दण्डकः । समयानिकषाशब्दौ समीपवाचकौ बाहुलकात् दुषेः–। दोषा । दिवेराप्रत्यये बाहुलकादेवास्य गुणाभावे दिवा । स्वदेराप्रत्यये बाहुलकादेव धातोर्धान्तादेशश्च स्वधेत्यादि ॥ चितेः—। 'चिती संज्ञाने' अस्मात्कक् प्रत्ययः स्यात्कश्चान्तादेशः ॥ अमरोक्तमाह—चिक्कणमिति । 'सूच पैशुन्ये' चुरादिरस्मात्स्मन्, णिलोपः, कुत्वषत्वे । ' सूक्ष्मं स्यात्कण्टकेऽध्यात्मे पुंस्यणौ त्रिषु चाल्पके' इति मेदिनी ॥ पातेः–'पा रक्षणे' अस्मात् डुमसुन्स्यात् । डित्त्वाट्टिलोपः । उकार उच्चारणार्थं इत्युज्ज्वलदत्तः । वस्तुतस्तूगित्कार्यार्थः । सुपुंसीति 'उगितश्च' इति ङीप् 'पुंसोऽसुङ्' इति सूत्रे न्यासरक्षिताभ्यां 'पुनातेर्मक्सुन् ह्रस्वश्च' इति पठितम् । 'पूञो डुम्सुन्' इत्यन्ये । भाष्ये तु–'सूतेः सप् प्रसवे पुमान्' इत्युक्तम् । 'उपेयप्रतिपत्त्यर्था उपाया अव्यवस्थिताः' इति तत्त्वम् ॥ रुचि–। 'रुच दीप्तावभिप्रीतौ च' । 'भुज पालनादौ' । 'भुजिष्यस्तु स्वतन्त्रे च हस्तसूत्रकयोः स्त्रियाम्' इति मेदिनी ॥ वसेः—। 'वस निवासे', 'वस आच्छादने' । 'बस्तिर्द्वयोर्निरूहे नाभ्यधोभुमिदशासु च' इति मेदिनी ॥ शास इति । 'शासु अनुशिष्टौ' ॥ अस्यतीति । असु क्षेपणे' । 'अगस्तिः कुम्भयोनौ च वङ्गसेनतरौ पुमान्' इति मेदिनी ॥ सावसेः । 'अस् भुवि' अस्मात्सावुपपदे तिः स्यात् बहुलवचनान्न भूभावः ॥ वौ–। 'तसु उपक्षये' अस्माद्विपूर्वात्तिः स्यात् । 'अङ्गुष्ठे सकनिष्ठे स्याद्वितस्तिर्द्वादशाङ्गुलः' इत्यमरः । 'स्त्रीपुंसयोर्वितस्तिः स्यात्' इत्यमरमाला ॥ पदि—। 'पद गतौ', 'प्रथ प्रख्याने' आभ्यां तिः स्यात्स च नित् ॥ पत्तिरिति पदातिः ॥ प्रथितिरिति प्रख्यातिः ॥ तितुत्रेष्विति । ग्रहादित्वादिडागमनिषेधो नेति भावः ॥ दृणातेः–। 'दॄ विदारणे' अस्मात्तिः स्याद्धातोर्ह्रस्वत्वं च । 'दृतिश्चर्मपुटे मत्स्ये ना' इति मेदिनी ॥ कृतॄ—। 'कॄ विक्षेपे', 'तॄ प्लवनतरणयोः', 'कृपू सामर्थ्ये' । 'किरीटं मुकुटे न स्त्री' इति चन्द्रगोमी । 'कृपीटमुदरे नीरे' इति विश्वः । दशपाद्यां तु 'कॄ गॄ कृपिकपिभ्यः' इति पठित्वा कम्पीट इति चतुर्थमुदाहृतम् ॥ रुचिवचि—। 'रुच दीप्तावभिप्रीतौ च', 'वच परिभाषणे', 'कुच शब्दे तारे' [ अथ वा 'कुञ्च कौटिल्याल्पीभावयोः' । कितचः कित्त्वात्सूत्रे नलोपेन निर्देशः । ] 'कुट कौटिल्ये' ॥ उचितमिति । 'वचिस्वपि–' इत्यादिना संप्रसारणम् ॥ कुटिकुषि–। 'कुड्मलो मुकुले पुंसि न द्वयोर्नरकान्तरे' इति मेदिनी । कुष

---

१ वार्तिकमिदं 'गुरोश्च हलः' इति सूत्रे आगमिष्यति । २ अथवेत्यादिकोष्ठकान्तर्गतः पाठो न सिद्धान्तसंमतः 'परेश्च घाङ्कयोः' इति सूत्रभाष्ये कुञ्चधातोश्चवर्गोपधत्वनिपातनेन नलोपानुपपत्तेः, रेफलोपस्याप्यङ्गीकरणीयत्वापत्तेश्च ॥

कुम्मलम् ॥ (ॐ) कुषेर्लश्च ॥ कुल्मलं पापम् ॥ (ॐ) सर्वधातुभ्योऽसुन् ॥ चेतः । सरः । पयः ॥ सदः ॥ (ॐ) रपेरत एच्च ॥ रेपोऽवद्यम् (ॐ) अशेर्देवने युट् च ॥ देवने स्तुतौ । यशः ॥ (ॐ) उब्जेर्बले बलोपश्च ॥ ओजः ॥ (ॐ) श्वेः संप्रसारणं च ॥ शवः । शवसी । बलपर्यायोऽयम् ॥ (ॐ) श्रयतेः स्वाङ्गे शिरः किच्च ॥ श्रयतेः शिर आदेशोऽसुन् किच्च । शिरः शिरसी ॥ (ॐ) अर्तेरुच्च ॥ उरः ॥ (ॐ) व्याधौ शुट् च ॥ अर्शो गुदव्याधिः ॥ (ॐ) उदके नुट् च ॥ अर्तेरसुन् स्यात्तस्य च नुट् । अर्णः । अर्णसी ॥ (ॐ) इण आगसि ॥ एनः ॥ (ॐ) रिचेर्धने घिच्च ॥ चात्प्रत्ययस्य नुट् । धित्त्वात्कुत्वम् । रेक्णः सुवर्णम् ॥ (ॐ) चायतेरन्ने ह्रस्वश्च ॥ चनो भक्तम् ॥ (ॐ) वृङ्शीङ्भ्यां

---

निष्कर्षे' । कुम्मलं छर्दनम् । विकुसितमित्यन्ये ॥ **सर्वधातुभ्योऽसुन्** । दशपाद्यां तु 'असुन्' इत्येव सूत्रम् । 'चिती संज्ञाने', 'चित सञ्चेतने' चुरादिः 'सृ गतौ' गौरादित्वान्ङीष् । '**सरसी** तु महासरः' इति शब्दार्णवः । 'महान्ति सरांसि सरस्यः' इति भाष्यम् । 'पय गतौ', 'पीङ् पाने' । '**पयः** स्यात् क्षीरनीरयोः' इति मेदिनी । 'षद्लृ विशरणादौ' सदः सभा । 'वर्च दीप्तौ' । '**वर्चो** नपुंसकं रूपे विष्ठायामपि तेजसि । पुंसि चन्द्रस्य तनये' इति मेदिनी । 'रुदिर अश्रुविमोचने' । '**रोदश्च रोदसी** चापि दिवि भूमौ पृथक् पृथक् । सहप्रयोगेऽप्यनयोः रोदस्यावपि **रोदसी**' इति विश्वः ॥ 'वी गत्यादिषु' । '**वयः** पक्षिणि बाल्यादौ यौवने च नपुंसकम्' इति मेदिनी । 'अन प्राणने' अनो भक्तम् । 'अनोद्मायःसरसां जातिसंज्ञयोः' इति टचि तु अदन्तम् । 'पाकस्थानं **महानसम्**' इत्यमरः । 'तमु काङ्क्षायाम्' '**तमः** क्लीबं गुणे शोके सैंहिकेयान्धकारयोः' इति रभसः । '**तमो** ध्वान्ते गुणे शोके क्लीबं वा ना विधुन्तुदे' इति मेदिनी ॥ 'षह मर्षणे' । '**सहो** बले ज्योतिषि च पुंसि हेमन्तमार्गयोः' इति मेदिनी । 'तप संतापे' । '**तपो** लोकान्तरेऽपि च । चान्द्रायणादौ धर्मे च पुमान् शिशिरमाघयोः' इति ॥ 'मह पूजायाम्' । 'मह उत्सवतेजसोः' इति मेदिनी । 'नभ हिंसायां' भौवादिकः, क्रैयादिकश्च । 'नभोऽन्तरिक्षं गगनम्' इत्यमरः । '**नभं** तु **नभसा** सार्द्धं तपं तु तपसा सह । सहं च सहसा सार्द्धं महं च महसा सह ॥ तमेन च तमः प्रोक्तं रजेनापि रजः समम्' इति द्विरूपकोशः । नन्वसुन्प्रत्यये नभः सहस्तम इत्यादिसान्तशब्दाः सिध्यन्ति, पचाद्यचि नभं सहन्तममित्याद्यजन्ता अपि सिध्यन्ति, परन्तु रज इति अकारान्तसकारान्तौ नलोपवच्छब्दौ न सिध्यत इति 'रजेनापि रजः समम्' इति कोशश्चिन्त्य एवेति चेत् । अत्राहुः—'रञ्ज रागे' अस्मादसुनि 'भूरञ्जिभ्यां कित्' इति वक्ष्यमाणेनासुनः कित्त्वान्नलोपे रज इति सिध्यति 'घञर्थे कविधानम्' इति कप्रत्यये तु रज इत्यदन्तोऽपि सिध्यतीति ॥ **रपेः**—। 'रप व्यक्तायां वाचि' अस्मादसुन् स्यादत एकारश्च ॥ **रेपोऽवद्यमिति** । 'अरेपसा तन्वा' इति मन्त्रे निरवद्ययेति भाष्ये उक्तं नञ्पूर्वकरेपश्शब्दस्यानवद्यवाचकत्वात् ॥ **अशेः**—। 'अशू व्याप्तौ' अस्मादसुन्स्याद्धातोर्युडागमश्च । यशः कीर्तिः ॥ **उब्जेः**—। 'उब्ज आर्जवे' अस्मादसुन् स्याद्बले वाच्ये बकारस्य लोपश्च । '**ओजो** दीप्ताववष्टम्भे प्रकाशबलयोरपि' इति मेदिनी ॥ **श्वेः**—। 'टुओश्वि गतिवृद्ध्योः' अस्मादसुन्स्यात्संप्रसारणं च ॥ **श्रयते**—। 'श्रिञ् सेवायाम्' अस्मात्स्वाङ्गे वाच्येऽसुन्स्यात्स च किंद्धातोः शिरादेशश्च । 'उत्तमाङ्गं **शिरः** शीर्षम्' इत्यमरः । घञर्थे कप्रत्यये तु शिर इत्यदन्तोऽपि '**शिरो**वाची **शिरो** दन्तो रजोवाची रजस्तथा' इति कोशान्तरम् 'पिण्डं दद्याद्गयाशिरे' इति वायुपुराणे । 'कुण्डलोद्घृष्टगण्डानां कुमाराणां तरस्विनाम् । निचकर्त शिरान् द्रौणिर्नालेभ्य इव पङ्कजान्' इति महाभारतम् ॥ **अर्तेः**—। 'ऋ गतौ' अस्मादसुन् कित्स्याद्धातोरुत्वं च । रपरत्वम् । '**उरो** वत्सं च वक्षश्च' इत्यमरः ॥ **व्याधौ**—। अर्तेरेव व्याधौ वाच्येऽसुन्, तस्य शुडागमश्च स्यात् ॥ **अर्ण इति** । पानीयमित्यर्थः ॥ **इणः**—। 'इण् गतौ' अस्मात्पापे वाच्येऽसुन्स्यात्तस्य नुडागमश्च । एनः पापम् ॥ **रिचेः**—। 'रिचिर् विरेचने', 'रिच वियोजनसंपर्चनयोः' इत्यस्माद्धने वाच्येऽसुन् ॥ **रेक्ण इति** । चजोः—इति कुत्वे 'अट्कुप्वाङ्—' इति णत्वम् । इह दशपादीवृत्तौ नुटं नानुवर्त्य रेकः रेकसी इत्युदाहृतम् । तन्न, उत्तरसूत्रे नुडनुवृत्तेर्निर्विवादत्वात् । मण्डूकप्लुतौ मानाभावाल्लक्ष्यविसंवादाच्च । उज्ज्वलदत्तेन तु 'रिचेर्धने चित्किच्च' इति पठित्वा नुटं चानुवर्त्य कित्त्वाद् गुणाभावे नुटश्चुत्वेन ञकारे रिञ्च इति साधितम् । तल्लोकवेदयोरप्रसिद्धत्वादुपेक्ष्यम् । 'नित्यं रेक्णोमर्त्यो परिषध्यं ह्यरण्यस्य रेक्णः' इत्यस्य प्रसिद्धत्वात् । वैदिकनिघण्टौ च सुवर्णापर्यायेषु तथा पाठात् । वेदभाष्ये तु प्रकृतसूत्रेणैव तस्य साधितत्वाच्च रेक्ण इति प्रयोग एव साधीयानिति दिक् । **चायतेः**—। 'चायृ पूजानिशामनयोः' अस्मादन्ने वाच्येऽसुन्स्यात्तस्य नुट् च धातोर्ह्रस्वत्वं च यलोपः । 'चनो दधिष्वपचता' 'सुते दधिष्वनश्चनः' इत्यादिमन्त्रेषु प्रसिद्धोऽयं चनशब्दः । एतेन 'च णोऽन्नम्' इत्युदाहृत्य बाहुलकाण्णत्वमिति वदन्तो दशपादीवृत्तिकारास्तदनुसारिणः प्रक्रियाकौमुदीप्रसादकारादयः परास्ताः ॥ **वृङ्**—।

रूपस्वाङ्गयोः पुट् च ॥ वर्पो रूपम् । शेपो गुह्यम् ॥ (उ) स्रुरीभ्यां तुट् च ॥ स्रोतः । रेतः ॥ (उ) पातेर्बले जुट् च ॥ पाजः । पाजसी ॥ (उ) उदके थुट् च ॥ पाथः ॥ (उ) अन्ने च ॥ पाथो भक्तम् ॥ (उ) अदेर्नुम्धौ च ॥ अदेर्भक्ते वाच्येऽसुन् नुमागमो धादेशश्च । अन्धोऽन्नम् ॥ (उ) स्कन्देश्च स्वाङ्गे ॥ स्कन्धः । स्कन्धसी ॥ (उ) आपः कर्माख्यायाम् ॥ कर्माख्यायां ह्रस्वो नुट् च वा । अप्नः । अपः । बाहुलकात् । आपः । आपसी ॥ (उ) रूपे जुट् च ॥ अब्जो रूपम् ॥ (उ) उदके नुम्भौ च ॥ अम्भः ॥ (उ) नहेर्दिवि भश्च ॥ नभः ॥ (उ) इण आगोऽपराधे च ॥ आगः पापापराधयोः (उ) अमेर्हुक्च ॥ अंहः ॥ (उ) रमेश्च ॥ रंहः ॥ (उ) देशे ह च ॥ रमन्तेऽस्मिन् रहः ॥ (उ) अञ्च्यञ्जियुजिभृजिभ्यः कुश्च ॥ एभ्योऽसुन् कवर्गश्चान्तादेशः । अङ्कश्चिह्नशरीरयोः । अङ्गः पक्षी । योगः समाधिः । भर्गस्तेजः ॥ (उ) भूरञ्जिभ्यां कित् ॥ भुवः । रजः ॥ (उ) वसेर्णित् ॥ वासो वस्त्रम् ॥ चन्देरादेश्च छः ॥ छन्दः ॥ (उ) पचिवचिभ्यां सुट् च ॥ पक्षसी तु स्मृतौ पक्षौ ।

---

'वृङ् संभक्तौ', 'शीङ् स्वप्ने' आभ्यां यथाक्रमं रूपे स्वाङ्गे च वाच्येऽसुन्स्यात्तस्य पुडागमश्च ॥ **वर्पोरूपमिति** । 'प्रच्छिश्नदेवा अभिवर्पसाऽभूत्' इत्यादिमन्त्रेषु प्रसिद्धमिदम् । '**शेपः** स्याद्वृषणं पेलम्' इति सुभूतिचन्द्रः । अकारान्तोऽप्ययम्, 'शेपपुच्छलाङ्गुलेषु शुनः' इति वार्तिके शेप इति निर्देशात्'यस्यामुशन्तः प्रहराम शेपम्'इति वैदिकप्रयोगाच्च॥**स्रुरीभ्याम्**–। 'स्रु गतौ' 'रीङ् श्रवणे' आभ्यामसुन् तस्य तुट् च स्यात् । 'स्रोतोऽम्बुवेगेन्द्रिययोः' इति विश्वः । '**रेतः** शुक्रे पारदे च' इति मेदिनी ॥ **पातेः**–। 'पा रक्षणे' अस्माद्बले वाच्येऽसुन् जुडागमश्च । युट् चेत्यन्तस्थादिपाठस्तूज्ज्वलदत्तस्य प्रामादिकः । 'पृथुपाजा अमर्त्यः' इत्यादिमन्त्रतद्भाष्यविरोधात् ॥ **उदके**–। पातेरुदके वाच्येऽसुन्स्यात्तस्य थुडागमश्च । 'कबन्धमुदकं पाथः' इत्यमरः ॥ **अदेः**–। 'अद भक्षणे' । 'भिस्सा स्त्री भक्तमन्धोऽन्नम्' इत्यमरः । 'द्विजातिशेषेण यदेतदन्धसा' इति भारविः ॥ **स्कन्देः**–। 'स्कन्दिर् गतिशोषणयोः' अस्मात्स्वाङ्गे वाच्येऽसुन्धश्चान्तादेशः ॥ **आपः**–। 'आप्लृ व्याप्तौ' । अस्मात्कर्माख्यायामसुन् ह्रस्वश्च धातोः प्रत्ययस्य नुडागमस्तु वा स्यात् । 'अस्वप्रस्वतीमश्विना' 'अपांसि यस्मिन्नधिसंदधुः' ॥ **बाहुलकादिति** । उपलक्षणं ह्रस्वनुटौ वा स्त इति व्याख्यानस्यापि सम्भवात् । तथा च 'ब्रुवते कतमेऽपि नपुंसकमापः' इति कोशमुदाहृत्य 'सर्वमापोमयं जगत्' इति प्रयोगो दुर्घटवृत्तौ समर्थितः ॥ **रूपे**–। रूपे वाच्ये आप्नोतेरसुन् ह्रस्वत्वं च धातोः प्रत्ययस्य जुडागमश्च स्यात् ॥ **अब्ज इति** । 'झलां जश् झशि' इति पकारस्य बकारः ॥ **उदके**–। उदके वाच्ये आप्नोतेरसुन् ह्रस्वत्वं च नुमागमो भश्चान्तादेशः ॥ **नहेः**–। 'णह बन्धने' अस्माद्गगने वाच्येऽसुन्भश्चान्तादेशः स्यात् । '**नभो** व्योम्नि **नभो** मेघे श्रावणे च पतद्ग्रहे । घ्राणे मृणालसूत्रे च वर्षासु च **नभः** स्मृतः' इति विश्वः । '**नभः** खं श्रावणो **नभाः**' इत्यमरः । '**नभं** तु नभसा सार्द्धम्' इति द्विरूपकोशादकारान्तोऽपि ॥ **इणः**–। इणोऽसुन्स्यादपराधे वाच्ये धातोरागादेशश्च॥ विश्वोक्तिमाह—**आग इति**॥ **अमेः**–। 'अम गत्यादौ' अस्मादसुन् हुगागमश्च धातोः स्यात् । अमन्ति गच्छन्त्यनेनाधस्तादित्यंहो दुरितम् ॥ **रमेश्च**–। 'रमेरसुन्स्यात् हुगागमश्च धातोः । रंहो वेगः । अहिरहिभ्यामसुना सिद्धे अघिरंघिभ्यामसुनि अङ्घो रङ्घ इति मा भूदिति सूत्रद्वयमिति गोवर्द्धनः । तथा च 'स्यान्मध्योष्मचतुर्थत्वमंहसो रंहसस्तथा' इति द्विरूपकोशः । एवं च 'दत्तार्घाः सिद्धसंघैर्विदधतु घृणयः शीघ्रमङ्घोविघातम्' इति, 'रङ्घस्सङ्घः सुराणां जगदुपकृतये नित्ययुक्तस्य यस्य स्तौति प्रीतिप्रसन्नोऽन्वहमहिमरुचेस्सोऽवतात्स्यन्दनो वः' इत्यत्र अङ्घो रङ्घ इति घकारपाठोऽनुप्राससरसिकानां प्रामादिक इति वदन्ति ॥ **देशे**–। देशे वाच्ये रमेरसुन् हकारश्चान्तादेशः स्यात् । 'रहस्तत्त्वरते गुह्ये' इति मेदिनी ॥ **अञ्चि**–। 'अञ्चु गतिपूजनयोः', 'अञ्जू व्यक्तिम्रक्षणकान्तिगतिषु', 'युजिर् योगे', 'युज समाधौ', 'भृजि भर्जने' । अङ्कः, अङ्कसी, अङ्कांसि । अङ्गः, अङ्गसी, अङ्गांसि । योगः, योगसी, योगांसि ॥ **भर्गस्तेज इति** । 'हरः स्मरहरो **भर्गः**' इत्यत्र भर्गशब्दो घञन्तः पुँल्लिङ्ग इति बोध्यः । 'उच समवाये' अस्मादसुनि बाहुलकात्कुत्वम्, न्यङ्क्वादित्वाद्वा । 'ओक आश्रयमात्रेऽपि मन्दिरेऽपि नपुंसकम्' इति मेदिनी ॥ **भूरञ्जि**–। 'भू सत्तायाम्', 'रञ्ज रागे' आभ्यामसुन्कित्स्यात् । भुवः अन्तरिक्षम् । षष्ठ्यन्तप्रतिरूपकमव्ययमिदम् । रजो रेणुः । 'रजः क्लीबं गुणान्तरे । आर्तवे च परागे च रेणुमात्रेऽपि दृश्यते' इति मेदिनी । घञर्थे कप्रत्यये तु अकारान्तोऽप्ययम् । 'रजोऽयं रजसा सार्द्धं स्त्रीपुष्पगुणधूलिषु' इत्यजयकोशः ॥ **वसेः**–। 'वस निवासे' अस्मादसुन् स्यात्स च णित् । णित्त्वाद्वृद्धिः ॥ **चन्देः**–। 'चदि आह्लादने' अस्मादसुन् आदेश्छकारश्च ।'**छन्दः** पद्यप्रभेदेऽपि स्वैराचाराभिलाषयोः' इति मेदिनी । अकारान्तोऽप्ययम् । 'छन्दावभिप्रायवशौ' इत्यमरद्विरूपकोशौ ॥ **पचि**–। 'डुपचष् पाके', 'वच परिभाषणे' आभ्यामसुन् स्यात्तस्य

---

१–दशममण्डले पञ्चाशीतितमे सूक्ते विवाहे कन्याप्रार्थनाविषयकोऽयं मंत्रः ॥ २ [illegible]बीजं तु अमो रम इति प्रयोगवारणाय सूत्रस्यावश्यकत्वेन नियमार्थत्वे न मानमिति । एवं चाङ्घो रङ्घ इत्यपि साध्वेवेति शब्दरत्नम् ।

वक्षो हृदयम् ॥ (उ) वहिहाधाञ्भ्यश्छन्दसि ॥ वक्षाः अनड्वान् । हासाश्चन्द्रः । धासाः पर्वत इति प्राञ्चः । वस्तुतस्तु णिदित्यनुवर्तते न तु सुट् । तेन वहेरुपधावृद्धिः । इतरयोरातो युगिति युक् । शोणा धृष्णू नृवाहसा । श्रोता हवं गृणतः स्तोमवाहाः । विश्वो विहायाः । वाजम्भरो विहायाः । देवो न यः पृथिवीं विश्वधायाः । अधारयत् पृथिवीं विश्वधायसम् ॥ (उ) इण आसिः ॥ अयाः वह्निः । स्वरादिपाठादव्ययत्वम् ॥ (उ) मिथुनेऽसिः पूर्ववच्च सर्वम् ॥ उपसर्गविशिष्टो धातुर्मिथुनं तत्रासुनोऽपवादोऽसिः स्वरार्थः। सुयशाः ॥ (उ) नञि हन एह च ॥ अनेहाः । अनेहसौ ॥ (उ) विधाञो वेध च ॥ विदधातीति वेधाः ॥ (उ) नुवो धुट् च ॥ नोधाः ॥ (उ) गतिकारकोपपदयोः पूर्वपदप्रकृतिस्वरत्वं च ॥ असिः स्यात् । सुतपाः । जातवेदाः । गतिकारकोपपदात् कृदित्युत्तरपदप्रकृतिस्वरत्वे सति शेषस्यानुदात्तत्वे प्राप्ते तदपवादार्थमिदम् ॥ (उ) चन्द्रे मो डित् ॥ चन्द्रोपपदान्माङोऽसिः स्यात्स च डित् । चन्द्रमाः ॥ (उ) वयसि धाञः ॥ वयोधास्तरुणः ॥ (उ) पयसि च ॥ पयोधाः समुद्रो मेघश्च ॥ (उ) पुरसि च ॥ पुरोधाः ॥ (उ) पुरूरवाः ॥ पुरुशब्दस्य दीर्घो रौतेरसिश्च निपात्यते ॥ (उ) चक्षेर्बहुलं शिच्च ॥ नृचक्षाः ॥ (उ) उषः कित् ॥ उषः ॥ (उ) दमेरुनसिः ॥ सप्तार्चिर्दमुनाः ॥ (उ) अङ्गतेरसिरिरुडागमश्च ॥ अङ्गिराः ॥ (उ) सर्तेरप्पूर्वादसिः । अप्सराः । प्रायेणायं भूम्नि । अप्सरसः ॥ (उ) विदिभुजिभ्यां विश्वे ॥ विश्ववेदाः । विश्वभोजाः ॥ (उ) वशेः कनसिः ॥ संप्रसारणम् । उशना ॥ ॥ इत्युणादिषु चतुर्थः पादः ॥ ॥

---

सुडागमश्च । चस्य कुत्वे सस्य षत्वम् । पक्षः, पक्षसी, पक्षांसि । 'यथा शालायै पक्षसी' इति श्रुतिः । 'पूर्वोत्तरे द्वे पक्षसी' इति अनीकाधिकरणे शावरभाष्यम् । माधवस्तु 'पक्षपरिग्रहे' इत्यस्मादसुन्—इत्याह ॥ **वहि—**। 'वह प्रापणे', 'ओहाक् त्यागे', 'डुधाञ् धारणादौ' एभ्योऽसुन् स्यात् । अत्र पूर्वसूत्रात्सुटमनुवर्तयतामुज्ज्वलदत्तादीनां मतेनोदाहरणमाह—**वक्षाः, हासाः, धासा इति** ॥ **प्राञ्च इति** । सकलवृत्तिकृतः प्रसादकारादयश्चेत्यर्थः । एतच्चायुक्तम्, उक्तोदाहरणानि हि लोके तु न दृश्यन्ते न वा संभवन्ति, सूत्रेऽस्मिन् छन्दसीत्युक्तत्वात् ॥ वेदे तु विपरीतान्येवोदाहरणानि दृश्यन्त इत्याह—**वस्तुतस्त्विति** । वेदभाष्यकारादयश्चेहानुकूला इत्यवधेयम् ॥ **इणः—**। 'इण् गतौ' अस्मादासिः स्यात् ॥ **मिथुने—**।**सुयशा इति** । 'अशेर्देवने युट् च' इत्यादि पूर्ववत् । सुपयाः, सुस्रोता इत्याद्युदाहार्यम् ॥ **नञि—**। हन्तेर्नञ्युपपदेऽसिः स्यात् धातोरेहादेशश्च 'ऋदुशनस्पुरुदंसो' इत्यादिना सावनङ् ॥ **विधाञः—**। 'डुधाञ् धारणादौ' विपूर्वादस्मादसिः स्याद्वेधादेशश्च सोपसर्गधातोः । **'वेधाः** पुंसि हृषीकेशे वुधे च परमेष्ठिनि' इति मेदिनी ॥ **नुवः—**। 'णु स्तुतौ' अस्मादसिः स्यात्तस्य धुडागमश्च ॥ **नोधा इति** । 'मद्यो भवद्वीर्याय नोधाः' इति मन्त्रे 'नोधा ऋषिर्भव नोधा ऋषिर्भवति' इति निरुक्तम् । नवं दधातीति तु नैरुक्तं व्युत्पत्त्यन्तरं बोध्यम् ॥ **गति—**। गतौ कारके चोपपदेऽसिः स्यात् । 'तप संतापे', 'विद ज्ञाने', 'विद्लृ लाभे' ॥ **चन्द्रे—**। चन्द्रं रजतममृतं च । तदिव मीयतेऽसौ चन्द्रमा इति हरदत्तः॥ **स च डिदिति** । डित्त्वाट्टिलोपे चन्द्रमसौ, चन्द्रमस इत्यादि सिध्यति ॥ **वयसि—**। 'डुधाञ् धारणे' अस्माद्वयस्युपपदेऽसिः स्यात्स च डित् ॥ **पयोधा इति** । पयःशब्दे उपपदे डुधाञः पूर्ववत् ॥ **पुरसि च** । पुरशब्द उपपदे पूर्ववत् । **'पुरोधास्तु** पुरोहितः' इत्यमरः ॥**रौतेरिति** । 'रु शब्दे' । **'पुरूरवा** बुधसुतो राजर्षिश्च **पुरूरवाः'** इत्यमरः ॥ **चक्षेः—**। 'चक्षिङ् व्यक्तायां वाचि' अस्मादसिः स्यात्स च बहुलं शित् । शित्त्वात्सार्वधातुकसंज्ञायां ख्याञ् न । नृचक्षा राक्षसः । शित्त्वाभावपक्षे तु ख्याञादेशः । प्रख्याः प्रजापतिः ॥ **उषः—**। 'उष दाहे' अस्मादसिः स्यात्स च कित् । उषः प्रभातम् । दशपाद्यां तु 'वसः कित्' इति पाठः । वसात सूर्येण सहेति उषा देवताविशेषः । 'अपो भि' इति सूत्रे 'उषसश्चेष्यते' इति वार्तिकस्य समुषाद्भिरित्युदाहरणं विन्नृणवद्भिरयं पाठः पुरस्कृतः । **दमेः—**। 'दम उपशमे' । **'सप्तार्चिर्दमुनाः** शुक्रः' इत्यमरः । पक्षे 'अन्येषामपि दृश्यते' इति दीर्घः । 'जुष्टो दमूनाः' 'दमूनसंगृहपतिं वरेण्यम्' । दशपाद्यां तु 'दमेरूनसिः' इति सूत्रे एव दीर्घः पठ्यते । तन्मते बाहुलकाद्ध्रस्वो बोध्यः । अङ्गिरा ऋषिभेदः ॥ **सर्तेः—**। 'सृ गतौ' ॥ **प्रायेणेति** । 'स्त्रियां बहुष्वप्सरसः स्यादेकत्वेऽप्सरा अपि' इति शब्दार्णवः ॥ **'अप्सरःस्वप्सराः** प्रोक्ताः सुमनः सुमनस्सु च' इति द्विरूपकोशः । 'एकाप्सरःप्रार्थितयोर्विवादः' इति रघुः ॥ **विदि—**। 'विद ज्ञाने', 'भुज पालनाभ्यवहारयोः' आभ्यां विश्वशब्दे उपपदेऽसिः स्यात् । शब्दस्वरूपपरत्वाद्विश्वे इत्यत्र स्मिन्नादेशो न कृतः । उदाहरणे विश्वं वेत्ति भुङ्क्ते इति विग्रहः । यत्तु 'तत्पुरुषे कृति' इति सप्तम्या अलुक् । विश्वेवेदाः अग्निः, विश्वेभोजाः इन्द्र इत्युज्ज्वलदत्तेनोक्तम् । तन्न, तथा सति स्मिन्नादेशस्य दुर्वारत्वापत्तेः । 'सुमृळीको भवतु विश्ववेदाः। 'पूषा भगः प्रमंहे विश्वभोजाः' इत्यादिमन्त्रेषु सुपो लुक एव दर्शनात्, वृत्तौ तथैवोदाहरणाच्च ॥ **वशेः—**। 'वश कान्तौ' । 'उशना भार्गवः कविः' इत्यमरः ॥ ॥ इत्युणादिषु चतुर्थः पादः ॥

अदि भुवो डुतच् ॥ अद्भुतम् ॥ (उ) गुधेरूमः ॥ गोधूमः ॥ (उ) मसेरूरन् ॥ मसूरः । प्रथमे पादे असेरुरन्मसेश्चेत्यत्र व्याख्यातः ॥ (उ) स्थः किच्च ॥ स्थूरो मनुष्यः ॥ (उ) पातेरतिः ॥ पातिः स्वामी । सम्पातिः पक्षिराजः ॥ (उ) वातेर्नित् ॥ वातिरादित्यसोमयोः ॥ (उ) अर्तेश्च ॥ अरतिरुद्वेगः ॥ (उ) तृहेः क्नो हलोपश्च ॥ तृणम् ॥ (उ) वृञ्लुटितनिताडिभ्य उलच् तण्डश्च ॥ व्रियन्ते लुट्यन्ते तन्यन्ते ताड्यन्त इति वा तण्डुलाः ॥ (उ) दंसेष्टटनौ न आ च ॥ दासः सेवकशूद्रयोः ॥ (उ) दंशेश्च ॥ दाशो धीवरः ॥ (उ) उदि चेर्डैसिः ॥ स्वरादिपाठादव्ययत्वम् । उच्चैः ॥ (उ) नौ दीर्घश्च ॥ नीचैः ॥ (उ) सौ रमः क्तो दमे पूर्वपदस्य च दीर्घः ॥ रमेः सुपूर्वाद्दमे वाच्ये क्तः स्यात् । कित्त्वादनुनासिकलोपः सूरत उपशान्तो दयालुश्च ॥ (उ) पूञो यण्णुक् ह्रस्वश्च ॥ यत्प्रत्ययः । पुण्यम् ॥ (उ) स्रंसेः शिः कुट् किच्च ॥ स्रंसतेः शिरादेशः यत्प्रत्ययः कित्तस्य कुडागमश्च । शिक्यम् ॥ (उ) अर्तेः क्युरुच्च ॥ उरणो मेषः ॥ (उ) हिंसेरीरन्नीरचौ ॥ हिंसीरो व्याघ्रदुष्टयोः ॥ (उ) उदि दृणातेरजलौ पूर्वपदान्त्यलोपश्च ॥ उदरम् ॥ (उ) डित् खनेर्मुट् स चोदात्तः ॥ अच् अल् च डित्स्याद्धातोर्मुट् स चोदात्तः । मुखम् ॥ (उ) अमेः सन् ॥ अंसः ॥ (उ) मुहेः खो मूर्च ॥ मूर्खः ॥ (उ) नहेर्हलोपश्च ॥ नखः ॥ (उ) शीङो ह्रस्वश्च ॥ शिखा ॥ (उ) माङ ऊखो मय् च ॥ मयूखः ॥ (उ) कलिगलिभ्यां फगस्योच्च ॥ कुल्फः शरीरावयवो रोगश्च । गुल्फः पादग्रन्थिः ॥ (उ) स्पृशेः श्वण्शुनौ पृ च ॥ श्वण्शुनौ प्रत्ययौ, पृ इत्यादेशः । पार्श्वोऽस्त्री कक्षयोरधः । पर्शुरायुधम् ॥ (उ) श्मनि श्रयतेर्डुन् ॥ श्मन्शब्दो मुखवाची । मुखमाश्रयत इति श्मश्रु ॥ (उ) अश्वादयश्च ॥ अश्रु नयनजलम् ॥ (उ) जनेष्टन् लोपश्च ॥ जटा ॥ (उ) अच् तस्य जङ्घच् ॥ तस्य जने

---

अदि भुवो–। अद् इत्यव्ययम् । आकस्मिकार्थेऽस्मिन्नुपपदे भूधातोर्डुतच्स्यात । डित्त्वाट्टिलोपः । अद्भुतमाश्चर्यम् ॥ गुधेः—। 'गुध परिवेष्टने' गुध्यते परिवेष्ट्यते प्राणिभिरिति 'गोधूमो नागरङ्गे स्यादोषधीव्रीहिभेदयोः' इति मेदिनी ॥ मसेः—। 'मसी परिणामे' ॥ स्थः—। 'ष्ठा गतिनिवृत्तौ' अस्मादूरन् । कित्त्वादालोपः ॥ स्थूरो मनुष्य इति । 'स्थूरस्य रयो वृहता य ईशे' इति मन्त्रे तु योगपुरस्कारात्स्थिरस्येत्यर्थ इति व्याख्यातम् ॥ पातेः–। 'पा रक्षणे' ॥ वातेः–। 'वा गतिगन्धनयोः' । रभसकोशस्थमाह–वातिरिति । अर्तेः–। 'ऋ गतौ' अस्मादितिः स्यात्स च नित् ॥ तृहेः–। 'तृह हिंसायाम्' क्नस्य कित्त्वाद् गुणाभावः ॥ वृञः–। 'वृञ् वरणे', 'लुट विलोडने'; 'तनु विस्तारे', 'तड आघाते' चुरादिः । एभ्य उलच् स्यात् तण्डादेशश्च धातोः । यद्यपि 'सानसिपर्णसि' इति सूत्रे तण्डुलशब्दो निपातितस्तथापि प्रत्ययस्वरेण मध्योदात्तः सः । अयं तु चित्स्वरेणान्तोदात्त इति विवेकः ॥ दंसेः–। 'दसि सेवने' अस्माट्टनौ स्यातां नकारस्याकारश्च । टनो नकार आद्युदात्तार्थः । 'दासः शूद्रे दानपात्रे भृत्यधीवरयोरपि' इति विश्वः ॥ दंशेः–। 'दंश दशने' अस्मादपि टटनौ नकारस्य चात्त्वं स्यात् । 'कैवर्ते दाशधीवरौ' इत्यमरः ॥ उदि—। 'चिञ् चयने' डैसो डित्त्वाट्टिलोपः ॥ सौ रमेः–। 'रमु क्रीडायाम्' ॥ पूञः–। 'पूञ् पवने' । पुण्यं मनोज्ञेऽभिहितं तथा सुकृतधर्मयोः' इति विश्वः ॥ स्रंसेः–। 'स्रंसु अधःपतने' कित्त्वं तु गुणाभावार्थम् ॥ अर्तेः–। 'ऋ गतौ' अस्मात्क्युप्रत्ययः स्याद्धातोरुत्वं च, रपरत्वम् । 'युवोरनाकौ' । 'मेढ्रोरभ्रोरणोर्णायुमेषवृष्णय एडके' इत्यमरः ॥ हिंसेः–। 'हिसि हिंसायाम्' ॥ उदि–। 'दॄ विदारणे' ॥ डित्खनेः–। 'खनु अवदारणे' अस्मादजलौ स्तः ॥ 'मुखं निस्सरणे वक्त्रप्रारम्भोपाययोरपि । सन्ध्यन्तरे नाटकादेः शब्देऽपि च नपुंसकम्' इति मेदिनी ॥ अमेः–। 'अम गतौ' । 'स्कन्धो भुजशिरोंऽसोऽस्त्री' इत्यमरः । 'अंसः स्कन्धे विभागे च' इति दन्त्यान्ते विश्वः ॥ मुहेः–। 'मुह वैचित्ये' अस्मात्खप्रत्ययो धातोर्मूरादेशश्च । मुह्यतीति मूर्खः । 'अज्ञे मूढयथाजातमूर्खवैधेयबालिशाः' इत्यमरः ॥ नहेः–। 'णह बन्धने' । 'नखं कररुहे षण्ढे गन्धद्रव्ये नखं नखी' इति विश्वः । 'नखी स्त्रीक्लीबयोः शुक्तौ नखरे पुन्नपुंसकम्' इति मेदिनी ॥ शीङ्—। 'शीङ् स्वप्ने' अस्मात्खः धातोर्ह्रस्वश्च । ह्रस्वविधानसामर्थ्याद् गुणाभावः । 'शिखा शाखाबर्हिचूडालाङ्गलिक्यग्रमात्रके । चूडामात्रे शिफायां च ज्वालायां प्रपदेऽपि च' इति मेदिनी ॥ माङः–। 'माङ् माने' 'मयूखस्त्विट्करज्वालासु' इत्यमरः ॥ कलि–। 'कल शब्दसंख्यानयोः', 'गल अदने' आभ्यां फक् स्यात् धातोरकारस्योत्त्वं च ॥ गुल्फ इति । 'तद्ग्रन्थी घुटिके गुल्फौ' इत्यमरः । तयोः पदयोर्ग्रन्थी इत्यर्थः ॥ स्पृशेः–। 'स्पृश संस्पर्शे' । 'पार्श्वं कक्षधरे चक्रोपान्तपर्शुगणेऽपि च' इति विश्वमेदिन्यौ ॥ श्मनि–। 'श्रिञ् सेवायाम्' अस्मात् श्मन्युपपदे डुन्स्यात् । डित्त्वाट्टिलोपः । 'तद्वृद्धौ श्मश्रु पुंमुखे' इत्यमरः । पुरुषस्य मुखे तेषां रोम्णां वृद्धौ श्मश्रुशब्दो वर्तत इत्यर्थः ॥ अश्वादयः–। 'अशू व्याप्तौ' अस्मात् रुन् प्रत्ययो, नञ्पूर्वात् श्रयतेर्डुन् च । यत्तूज्ज्वलदत्तेनोक्तम् 'अश्नातेर्डुन् रुट् च' इति तदयुक्तम्, घित्त्वाट्टिलोपे सति धातोरश्रवणप्रसङ्गात् । न च टिलोपाभावो निपात्यत इति वाच्यम्; तथा सति डित्त्वो-

जङ्घादेशः स्यादच्च । जङ्घा ॥ (उ) हन्तेः शरीरावयवे द्वे च ॥ जघनम् । पश्चान्नितम्बः स्त्रीकट्याः क्लीबे तु जघनं पुरः ॥ (उ) क्लिशेरन् लो लोपश्च ॥ लकारस्य लोपः । केशः ॥ (उ) फलेरितजादेश्च पः ॥ पलितम् ॥ (उ) कृञादिभ्यः संज्ञायां वुन् ॥ करकः । करका । कटकः । नरकम् । नरकः । नरको नारकोऽपि चेति द्विरूपकोशः । सरकं गगनम् । कोरकः । कोरकं च ॥ (उ) चीकयतेराद्यन्तविपर्ययश्च ॥ कीचको वंशभेदः ॥ (उ) पचिमच्योरिच्चोपधायाः ॥ पेचकः । मेचकः ॥ (उ) जनेररष्ठ च ॥ जठरम् ॥ (उ) वचिमनिभ्यां चिच्च ॥ वठरो मूर्खः । मठरो मुनिशौण्डयोः । विदादित्वान्माठरः । गर्गादित्वान्माठर्यः । (उ) ऊर्जि दृणातेरलचौ पूर्वपदान्तलोपश्च ॥ ऊर्दरः शूररक्षसोः ॥ (उ) कृदरादयश्च ॥ कुदरः कुसूलः । मृदरं विलसत् । सृदरः सर्पः ॥ (उ) हन्तेर्युन्नाद्यन्तयोर्घत्वतत्वे ॥ घातनो मारकः ॥ (उ) क्रमिगमिक्षमिभ्यस्तुन् वृद्धिश्च ॥ क्रान्तुः पक्षी । गान्तुः पथिकः । क्षान्तुर्मशकः ॥ (उ) हर्यतेः कन्यन् हिरच् ॥ कन्यन् प्रत्ययः हिरण्यम् ॥ (उ) कृञः पाशः ॥ कर्पासः । बिल्वादित्वात्कार्पासं वस्त्रम् ॥ (उ) जनेस्तु रश्च ॥ जर्तुर्हस्ती योनिश्च ॥ (उ) ऊर्णोतेर्डः ॥ ऊर्णा ॥ (उ) दधातेर्यन्नुट् च ॥ धान्यम् ॥ (उ) जीर्यतेः क्रिन् रश्च वः ॥ जिव्रिः स्यात्कलपक्षिणोः । बाहुलकाद्वलि चेति दीर्घो न ॥ (उ) मव्यतेर्यलोपो मश्चापतुडालः ॥ मव्यतेरालप्रत्ययः स्यात्तस्यापतुडागमो धातोर्यलोपो मकारश्चान्त्यस्य । ममापतालो विषये ॥

---

त्प्रेक्षणस्यानिष्फलत्वापत्तेरिति दिक् ॥ जनेः—। 'जनी प्रादुर्भावे' अस्माट्टन्प्रत्ययः स्याद्धातोरन्त्यलोपश्च । 'जटा लग्नकचे मूले मांस्यां लक्षे पुनर्जटी' इति मेदिनी ॥ जङ्घेति । जनेरच्प्रत्यये सति 'अजाद्यतः' इति टाप् ॥ हन्तेः—। देहावयवे वाच्ये हन्तेरच् प्रत्ययः स्यात्, द्वित्वं च धातोः । अभ्यासकार्यम् । 'अभ्यासाच्च' इति कुत्वम् ॥ अमरोक्तिमाह— पश्चान्नितम्ब इति । 'जघनं च स्त्रियाः श्रोणिपुरोभागे-कटावपि' इति मेदिनी ॥ क्लिशेः—। 'क्लिशू विबाधने' अस्मादन्स्यात् । 'केशः स्यात्पुंसि वरुणे ह्रीबेरे कुण्डलेऽपि च' इति मेदिनी ॥ फलेः—। 'फल निष्पत्तौ' । 'पलितं जरसा शौक्ल्यम्' इत्यमरः ॥ 'पलितं शैलजे तापे केशपाके च कर्दमे' इति मेदिनी ॥ कृञादिभ्यः—। 'डुकृञ् करणे'। करकः कमण्डलुः, करका वृष्टिपाषाणः । 'कटे वर्षावरणयोः' । 'कटको वलये सानौ' । 'क्वुन् शिल्पिसंज्ञयोः' इति क्वुनाऽप्ययं सिद्धः, तथा च गुणभाज इहैव वुनि उदाहार्याः, निषेधभाजस्तु क्वुनि, उदासीनास्तु यत्रकुत्रचिदिति भावः । 'नॄ नये' । 'स्यान्नारकस्तु नरको निरयो दुर्गतिः स्त्रियाम्' इत्यमरः । 'नरकः पुंसि निरये देवारातिप्रदेशयोः' इति मेदिनी । उदयनाचार्यास्तु 'न च नरकाण्येव न सन्ति' इति क्लीबं प्रयुञ्जते, तन्निर्मूलमित्याहुः । 'सृ गतौ' । 'सरकोऽस्त्री शीधु पात्रे शीधुपानेक्षुशीधुनोः' इति मेदिनी । 'कुर शब्दे' । 'कोरकोऽस्त्री कुड्मले स्यात्कक्कोलकमृणालयोः' इति मेदिनी । 'विचकार कोरकाणि' इति माघः । 'कोरकः पुमान्' इत्यमरोक्तिस्तु नादर्त्तव्येत्याहुः । चीकयतेः—। 'चिक आमन्त्रणे' 'चीक च' चुरादिः, अस्याद्यन्तविपर्ययः, पचिमच्योरित्त्वं चानुपदं वक्ष्यमाणं बाहुलकवललभ्यं बोध्यम् । 'कीचको दैत्यभिद्वाताहतसस्वनवंशयोः' इति मेदिनी । 'डुपचष् पाके' । 'उलूके करिणः पुच्छमूलोपान्ते च पेचकः' इत्यमरः । 'पेचको गजलाङ्गूलमूलोपान्ते च कौशिके' इति मेदिनी । 'मच मुचि कल्कने' । 'मेचकस्तु मयूरस्य चन्द्रके श्यामले पुमान् । तद्युक्ते वाच्यवत् क्लीबं स्रोतोऽञ्ज-नान्धकारयोः' इति मेदिनी ॥ जनेः—। 'जन जनने', 'जनी प्रादुर्भावे' वा । 'जठरः कठिनेऽपि स्यात्' इत्यमरः । 'जठरो न स्त्रियां कुक्षौ वृद्धकर्कटयोस्त्रिषु' इति मेदिनी ॥ वचि—। 'वच परिभाषणे', 'मन ज्ञाने' आभ्यामरप्रत्ययः स्यात्स च चित् ठश्चान्तादेशः । 'बठरः कुक्कुटे वण्टे शठे च' इति मेदिनी ॥ ऊर्जि—। 'दॄ विदारणे' अस्मादूर्ज्युपपदे अलचौ प्रत्ययौ स्तः ॥ कृदरादयश्च । कृ मृ सृ एतदव्ययपूर्वकदृणातिप्रकृतिकालजन्ता निपात्यन्ते ॥ हन्तेः—। 'हन हिंसागत्योः' ॥ क्रमि—। 'क्रमु पादविक्षेपे', 'गम्लृ गतौ', 'क्षमूष् सहने' एभ्यस्तुन्स्यादेषां वृद्धिश्च ॥ हर्यतेः—। 'हर्य गतिकान्त्योः' । 'हिरण्यं रेतसि द्रव्ये शातकुम्भवराटयोः । अक्षये मानभेदे स्यादकुप्यं च नपुंसकम्' इति मेदिनी ॥ कृञः—। 'डुकृञ् करणे' ॥ जनेः—। तु इत्यविभक्तिकम् । जनेस्तुप्रत्ययो रेफश्चान्तादेशः स्यात् ॥ ऊर्णोतेः—। 'ऊर्णुञ् आच्छादने' अस्मात् डः स्यात् । डित्त्वाट्टिलोपः । टाप् । 'ऊर्णा मेषादिलोम्नि स्यादावर्ते चान्तरा भ्रुवोः' इत्यमरः । भ्रुवोर्मध्ये य आवर्त्तस्तत्रेत्यर्थः । 'अन्तरान्तरेण' इति द्वितीया ॥ दधातेः—। 'डुधाञ् धारणादौ' अस्माद्यत् प्रत्ययः स्यात्तस्य नुडागमश्च । 'धान्ये व्रीहिषु धान्याकम्' इति मेदिनी ॥ जीर्यतेः—। 'जॄ वयोहानौ' अस्मात् क्रिन्स्यात् । 'ॠत इद्धातोः' । रपरत्वम् । रेफस्य वकारादेशः ॥ मव्यतेः—। 'मव्य बन्धने' ॥ अन्त्यस्येति । वकारस्येत्यर्थः ॥



---

१ 'चान्तरा भ्रुवौ' इति पाठो भवेदित्याहुः ॥

उ॰ **ऋजेः कीकन्** ॥ ऋजीक इन्द्रो धूमश्च ॥ उ॰ **तनोतेर्डउः सन्वच्च** ॥ तितउः पुंसि क्लीबे च ॥ उ॰ **अर्भकपृथुकपाका वयसि** ॥ ऋधु वृद्धौ । अतो वुन् । अकारश्चान्तादेशः । प्रथेः कुकन्संप्रसारणं च । पिवतेः कन् ॥ उ॰ **अवद्यावमाधमार्वरेफाः** ॥ कुत्सिते वदेर्नञि यत् । अवद्यम् । अवतेरमः । वस्य पक्षे धः । अवमः । अधमः । अर्तेर्वन् । अर्वा । रिफतेस्तौदादिकाद् रेफः ॥ उ॰ **लीरीङोर्ह्रस्वः पुट् च तरौ श्लेषणकुत्सनयोः** ॥ तरौ प्रत्ययौ क्रमात् स्तो धातोर्ह्रस्वः प्रत्ययस्य पुट् । लिप्तं श्लिष्टम् । रिप्रं कुत्सितम् ॥ उ॰ **क्लिशेरीच्चोपधायाः कन् लोपश्च लो नाम् च** ॥ क्लिशेः कन् स्यात् उपधाया ईत्त्वं लस्य लोपो नामागमश्च । कीनाशो यमः । कित्त्वफलं चिन्त्यम्[1] ॥ उ॰ **अश्नोतेराशुकर्मणि वरट् च** ॥ चकारादुपधाया ईत्त्वम् । ईश्वरः ॥ उ॰ **चतेरुरन्** ॥ चत्वारः ॥ उ॰ **प्राततेररन्** ॥ प्रातः ॥ उ॰ **अमेस्तुट् च** ॥ अन्तर्मध्यम् ॥ उ॰ **दहेर्गो लोपो दश्च नः** ॥ गप्रत्ययो धातोरन्त्यस्य लोपो दकारस्य नकारः । नगः ॥ उ॰ **सिचेः संज्ञायां हनुमौ कश्च** ॥ सिञ्चतेः कप्रत्ययो हकारादेशो नुम् च स्यात् । सिंहः ॥ उ॰ **व्याङि घ्रातेश्च जातौ** ॥ कप्रत्ययः स्यात् । व्याघ्रः ॥ उ॰ **हन्तेरच् घुर च** ॥ घोरम् ॥ उ॰ **क्षमेरुपधालोपश्च** ॥ चादच् । क्ष्मा ॥ उ॰ **तरतेर्ड्रिः** ॥ त्रयः । त्रीन् ॥

---

**ऋजेः**—।'ऋज गतौ'॥ **तनोतेः**—।'तनु विस्तारे' अस्मात् डउः प्रत्ययस्तस्य सन्वद्भावात् द्वित्वमभ्यासस्येत्त्वं च।डित्त्वाट्टिलोपः। पृथगुच्चारणसामर्थ्याद् गुणो न । तितउः चालिनी। 'सक्तुमिव तितउना पुनन्तो यत्र धीरा मनसा वाचमक्रत' ।'तितउ परिपवनं भवति' इति पस्पशायां भाष्यम् । 'चालिनी **तितउः** पुमान्' इत्यमरः । 'चालनं तितउन्युक्तम्' इति कोशान्तरम्।'स्याद्वास्तु हिङ्गु **तितउ**' इति पुंनपुंसकवर्गे त्रिकाण्डशेषः॥ **अर्भक**—। एते निपात्यन्ते । निपातनप्रकारमेवाह—**ऋधु वृद्धौ इत्यादि** ॥ **प्रथेरिति** । 'प्रथ प्रख्याने' । 'पा पाने' पिवति स्तनादिकमिति पाकः । 'पोतः **पाकोऽर्भको** डिम्भः **पृथुकः** शावकः शिशुः' इत्यमरः । '**अर्भकः** कथितो बाले मूर्खेऽपि च कृशेऽपि च'। '**पृथकः** पुंसि चिपिटे शिशौ स्यादभिधेयवत्'। '**पाकः** परिणतौ शिशौ । केशस्य जरसा शौक्ल्ये स्थाल्यादौ पचनेऽपि च' इति मेदिनी ॥ **अवद्य**—। एते कुत्सिते निपात्यन्ते । 'वद व्यक्तायां वाचि', 'अव रक्षणादौ', 'ऋ गतौ', 'रिफ कत्थनयुद्धनिन्दाहिंसादानेषु'। 'निकृष्टप्रतिकृष्टार्वरेफयाप्याऽ**वमाधमाः**' इत्यमरः । 'कुपूयकुत्सि**तावद्य**खेटगर्ह्याणकाः समाः' इति च । '**अधमः** स्याद्गर्ह्ये ऊनेऽपि' इति मेदिनी । '**अर्वा** तुरङ्गमे पुंसि कुत्सिते वाच्यलिङ्गकः'। '**रेफो** वर्णे पुंसि स्यात्कुत्सिते पुनरन्यवत्' इति च मेदिनी॥ **लीरीङोः**—। 'लीङ् श्लेषणे', 'रीङ् श्रवणे' ॥ **क्रमादिति** । श्लेषणे वाच्ये तप्रत्ययः, कुत्सिते वाच्ये रप्रत्यय इत्यर्थः । '**लिप्तं** विषाक्ते भुक्ते च वाच्यवत्स्याद्विलेपिते' इति विश्वः ॥ **क्लिशेः**—। क्लिशू विबाधने' ॥ **नामागमश्चेति** । प्रत्ययस्येति शेषः ॥ **चिन्त्यमिति** । ईत्वविधानसामर्थ्यादेव गुणाभावसिद्धेरिति भावः । '**कीनाशः** कर्षकक्षुद्रपांशुघातिषु वाच्यवत् । यमे ना' इति मेदिनी ॥ **अश्नोतेः**—। 'अशू व्याप्तौ' अस्माद्वरट् स्यात्। आशु कर्म वरदानादिक्रिया यस्य तस्मिन्वाच्ये शीघ्रदातरीत्यर्थः ॥ **ईश्वर इति** । स्त्रियां तु टित्त्वान्ङीप् । ईश्वरी प्रत्ययस्वरेण मध्योदात्ता । ईशेः वनिपि 'वनो र च' इति ङीब्रयोस्तु धातुस्वरेणाद्युदात्ता । पुंयोगलक्षणे ङीषि अन्तोदात्ता । 'स्थेशभासपिसकसः' इति वरचि तदन्ताट्टापि ईश्वरेति विवेकः । '**ईश्वरो** मन्मथे शंभौ नाट्ये स्वामिनि वाच्यवत् । **ईश्वरी** चेश्वरोमायाम्' इति मेदिनी ॥ ईश्वरा उमायामिति च्छेदः । **ईश्वरः** शङ्करेधीशे तत्पत्न्यामीश्वरा' इति वोपालितः । 'विन्यस्तमङ्गलमहौषधिरीश्वरायाः' इति भारविः । दशपाद्यां तु सूत्रान्तरमपि ॥ हन्तेरन् घश्च । 'हन हिंसागत्योः' अस्माद्रन् प्रत्ययः स्यात् घश्चान्तादेशः । हन्यते गम्यतेऽतिथिभिरिति घरः गृहम् ॥ **चतेः**—। 'चते याचने' अस्मादुरन् स्यादकार उच्चारणार्थः । 'चतुरनडुहोरामुदात्तः' इत्याम् ॥ **प्राततेः**—। 'अत सातत्यगमने' प्रपूर्वादस्मादरन्स्यात् रेफादकार उच्चारणार्थः । स्वरादिपाठादव्ययत्वम् ॥ **अमेः**—। 'अम गतिशब्दसंभक्तिषु' अस्मादरन्स्यात्तस्य तुडागमश्च । अन्तःशब्दोऽपि प्रातःशब्दवत् अव्ययम् ॥ **दहेः**—। 'दह भस्मीकरणे' '**नगो** महीरुहे शैले भास्करे पवनाशने' इति मेदिनी ॥ **सिचेः**—। षिच क्षरणे' ॥ **हकारादेश इति** । धातोरन्त्यस्येत्यर्थः । '**सिंहः** कण्ठीरवे राशौ सत्तमे चोत्तरस्थितः । **सिंही** क्षुद्रबृहत्योः स्याद्वासके राहुमातरि' इति विश्वः॥**व्याङि**—। 'घ्रा गन्धोपादाने' अस्माज्जातौ वाच्यायां कः स्यात् । कित्त्वादातो लोपः । '**व्याघ्रः** स्यात्पुंसि शार्दूले रक्तैरण्डकरञ्जयोः। श्रेष्ठे नराद्युत्तरस्थः कण्ठकार्यां च योषिति' इति मेदिनी॥**हन्तेः**—। हन्तेरच् स्याद्धातोर्घुरादेशश्च। '**घोरं** भीमे हरे **घोरः**' इति विश्वः॥ **क्षमेः**—। 'क्षमूष् सहने' ।'**क्ष्मा**ऽवनिर्मेदिनी मही' इत्यमरः॥**तरतेः**—।'तॄ प्लवनतरणयोः'। अस्मात् ड्रिः स्यात्, डित्त्वाट्टिलोपः॥



1—प्रत्ययस्य नामागमे कीनाशेति रूपासिद्धया चिन्त्यम् ॥

ॐ ग्रहेरनिः ॥ ग्रहणिः । ङीप् । ग्रहणी व्याधिभेदः ॥ ॐ प्रथेरमच् ॥ प्रथमः ॥ ॐ चरेश्च ॥ चरमः ॥ ॐ मङ्गेरलच् ॥ मङ्गलम् ॥ ॥ इत्युणादिषु पञ्चमः पादः ॥ ॥ ॥ इत्युणादिप्रक्रिया ॥

---

ग्रहेः—। 'ग्रह उपादाने' ॥ ङीषिति । 'कृदिकारात्—' इत्यनेन । 'ग्रहणी रुक्प्रवाहिका' इत्यमरः ॥ प्रथेः—। 'प्रथ प्रख्याने'। 'प्रथमस्तु भवेदादौ प्रधानेऽपि च वाच्यवत्' इति मेदिनी । 'प्रथमचरम—' इति वैकल्पिकसर्वनामत्वात्पक्षे जसः शीभावः । प्रथमे, प्रथमाः ॥ चरेश्च । 'चरगतिभक्षणयोः' अस्मादमच्स्यात् । चरमे, चरमाः । योगविभागश्चिन्त्यप्रयोजनः । 'प्रथिचरिभ्याम्' इत्येव सुवचम् ॥ मङ्गेः—। 'उख उखि—' इत्यादिदण्डके गत्यर्थको मगिः पठ्यते । 'कल्याणं मङ्गलं शुभम्' मङ्गलो ग्रहभेदः । 'मङ्गला सितदूर्वायामुमायां पुंसि भूमिजे । नपुंसकं तु कल्याणे सर्वार्थे रक्षणेऽपि च' इति मेदिनी । भावे ष्यञि माङ्गल्यम् । 'तत्र साधुः' इति यत् । 'मङ्गल्यः स्यात्त्रायमाणाश्वत्थविल्वमसूरके । स्त्रियां शम्यामधःपुष्पामिसिशुक्लवचासु च ॥ रोचनायामथो दध्नि क्लीबं शिवकरे त्रिषु' इति मेदिनी ॥ इत्युणादिषु पञ्चमः पादः ॥ ॥

उणादिप्रत्ययाः सन्ति पादोत्तरशतत्रयम् । तेषां विवेचनं त्वत्र ज्ञानेन्द्रस्वामिभिः कृतम् ॥

प्राचा तु कतिपयानामेवोणादीनामुपन्यासः कृतो न तु सर्वेषां, सोप्युपन्यासो नैकप्रघट्टकतया कृतः । किन्तु विच्छिद्येति स्पष्टम् । तत्रापि केचित्प्रमादा मनोरमायां प्रदर्शितास्तेष्वेव कांश्चित्प्रमादान्दर्शयामः—'भजो ण्विः' इति ण्विप्रकरणे 'छन्दसि सहः' 'वहश्च' इत्युपन्यस्य 'परौ व्रजेः षः पदान्ते' इति ण्विस्तेनैव षः परिव्राडित्ययं हि प्राचो ग्रन्थस्तद्व्याख्यायां तत्पौत्रेण पञ्चपाद्युणादिसूत्रे इदं पठ्यते इत्युक्तम् तदुभयमपि प्रामादिकम् , 'क्विब्वचि—' इति क्विब्दीर्घौ हि प्रक्रम्य 'परौ व्रजेः—' इति सूत्रस्य पाठात् । अस्मिन्नंशे पञ्चपादीदशपाद्योरेकवाक्यत्वात् । यदपि 'धनर्त्तिचक्षिङ्वपितपिजनियजेरुस्' इति पठितम् । तदप्यनाकरम् । तथा हि—'जनेरुसिः'। 'अर्तिपॄवपियजितनिधनितपिभ्यो नित्'। 'एतेर्णिच'। 'चक्षेः शिच्च' इति सर्वसंमतः पाठः । 'तपूंषि तस्मै', 'वपुष्टरम्' इत्यादिमन्त्रेषु आद्युदात्ततया अनुकूलश्च । वेदभाष्ये एवमेव स्थितम् । इत्यादयो द्वितीयपादे प्रमादाः ॥ तृतीयपादेपि 'स्तनिदूषिपूषिगदिहृदिभ्यो णेरित्नुच्' इति प्राचा पठितं, तत्र दूषिहृदी केषामपि वृत्तिकृतां ग्रन्थे न पठितौ, दूषयित्नुः हृदयित्नुरिति प्रयोगोऽपि आकरे न दृष्टः । 'स्तनिहृषिपुषिमुदिगदिमादिभ्यः' इति हि पञ्चपादीपाठः । 'घुषिगन्धिमण्डिजनिगमिभ्यः इति दशपाद्यामधिकं पठितमित्यन्यदेतत् । यदपि 'श्रुदक्षिस्पृहिगृहिदृजृभ्य आय्यः' इति पठित्वा दराय्यः जराय्य इति प्राचोक्तं तदपि न, दृजृग्रहणस्याकरानारूढत्वात् । इत्यादयस्तृतीयपादे प्रमादाः ॥ यदपि 'कॄगॄस्तॄभ्यः क्विन्' कीर्विः, गीर्विः, स्तीर्विरिति प्राचोक्तम् । तदपि लिपिभ्रमप्रयुक्तमेव । 'कॄ विक्षेपे', 'गॄ निगरणे', 'स्तॄञ् आच्छादने', इति प्राचो ग्रन्थं विवृण्वतामुक्तिरपि मूलाशुद्धयैवाशुद्धा । 'जॄस्तॄजागृभ्यः क्विन्' इति हि पाठ उणादिवृत्तिकृतां माधवादीनां च संमतः । जीर्विः पशुः । शीर्विर्हिंस्रः । स्तीर्विरध्वर्युरिति तद्ग्रन्थेषूपपादितम् । स्तॄ इत्यस्य दीर्घान्तत्व एव 'ॠत इद्धातोः' इतीत्त्वं लभ्यते न तु ह्रस्वान्तत्वेऽपि तस्मायथाकरमेव हि ग्रहीतुमुचितमिति दिक् ॥ यदपि प्राचोक्तं 'ग्लाज्याहात्वरिभ्यो निः' इति । तदप्यनाकरम्, आकरे हि 'वीज्याज्वरिभ्यो निः' इति पठित्वा सूत्रद्वयानन्तरम् 'वहिश्रि—' इति सूत्रे 'ग्लाहात्वरिभ्यो नित्' इति सूत्रितत्वात् । 'तूर्णी रथः सदानवः' इत्यादावाद्युदात्तदर्शनाच्च । न च 'स्त्रियां क्तिन्' इत्यधिकारस्थं वार्तिकमेवेदं प्राचोदाहृतं, न तूणादिसूत्रस्थमिति वाच्यम् एवमपि त्वरतेः पाठस्यानुचितत्वात् । न ह्यसौ वार्तिकेऽस्तीति दिक् । एवं 'संस्त्याने स्त्यायतेर्ड्रट्' इत्यपि प्राचोदाहरणमनाकरम्, । स्त्यातेर्ड्रडित्येव सूत्रस्याकरे पञ्चपाद्यां दशपाद्यां चोपलम्भात् । 'संस्त्याने स्त्यायतेर्ड्रट् स्त्री । सूतेः सप्रसवे पुमान्' इति भाष्ये श्लोकपाठो, न तु सूत्रपाठस्य तथात्वं दृश्यते । एवं तद्ग्रन्थव्याख्यातॄणामपि प्रमादा ऊह्याः । तद्यथा—पाणिन्यादिमुनीनिति व्याचक्षाणैरुक्तम् 'मनेरुच्चोपधायाः' इति, न ह्येवंविधं सूत्रं पञ्चपाद्यां दशपाद्यां वास्ति । अत इत्यमुक्तवीत मनेरुच्च इत्येव सूत्रितत्वादिति दिक् ॥ इति चतुर्थपादे प्राचः प्रमादाः ॥ ॥ इत्युणादयः ॥ शिवम् ॥

## अथोत्तरकृदन्तम् ।

**उणादयो बहुलम्** । ३ । ३ । १ । एते वर्तमाने संज्ञायां च बहुलं स्युः । केचिदविहिता अप्यूह्याः ॥
संज्ञासु धातुरूपाणि प्रत्ययाश्च ततः परे । कार्याद्विद्यादनूबन्धमेतच्छास्त्रमुणादिषु ॥

**भूतेऽपि दृश्यन्ते** । ३ । ३ । २ ॥ **भविष्यति गम्यादयः** । ३ । ३ । ३ ॥ **दाशगोघ्नौ संप्रदाने** । ३ । ४ । ७३ । एतौ संप्रदाने कारके निपात्येते । दाशन्ति तस्मै दाशः । गां हन्ति तस्मै गोघ्नोऽतिथिः ॥ **भीमादयोऽपादाने** । ३ । ४ । ७४ । भीमः । भीष्मः । प्रस्कन्दनः । प्ररक्षः । मूर्खः । खलतिः ॥ **ताभ्यामन्यत्रोणादयः** । ३ । ४ । ७५ । संप्रदानपरामर्शार्थं ताभ्यामिति । ततोऽसौ भवति तन्तुः । वृत्तं तदिति वर्त्म । चरितं तदिति चर्म ॥ **तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्** । ३ । ३ । १० । क्रियार्थायां क्रियायामुपपदे भविष्यत्यर्थे धातोरेतौ स्तः । मान्तत्वादव्ययत्वम् । कृष्णं द्रष्टुं याति । कृष्णं दर्शको याति । अत्र वासरूपन्यायेन तृजादयो न । पुनर्ण्वुलुक्तेः ॥ **समानकर्तृकेषु तुमुन्** । ३ । ३ । १५८ । अक्रियार्थोपपदार्थमेतत् । इच्छार्थेष्वे-

---

**उणादयो बहुलम्** । 'वर्तमाने लट्' इत्यतो वर्तमानग्रहणं, 'पुवः संज्ञायाम्' इत्यतः संज्ञाग्रहणं चानुवर्तते तदाह-**एते इति** । अत्र हि सूत्रे 'धातोः', 'प्रत्ययः', 'कृदतिङ्' इति चानुवर्तते, तेन 'कृवापाजिमि-' इत्यादिना विहिता नामष्टाध्यायीबहिर्भूतानामप्युणादीनां प्रत्ययसंज्ञा कृत्संज्ञा च सिध्यति । तथा चोणादिप्रत्ययाः सर्वे धातोः परत्र 'कर्त्तरि कृत्' इति कर्त्रर्थे भवन्ति । उणादिप्रत्ययान्तस्य 'कृत्तद्धित-' इति प्रातिपदिकसंज्ञायां स्वाद्युत्पत्तिरित्यादि सर्वमपीष्टं सिध्यति । अपरिपूर्णानामुणादीनां परिपूर्णार्थं बहुलग्रहणं, तस्य फलमाह-**केचिदविहिता अपीति** । हृषेरुलज्विहितः, स तु शङ्केरपि भवति शङ्कुलेति प्रयोगदर्शनात् । किंच, फिडफिड्डप्रत्ययौ कुत्रापि न विहितौ अर्तेरूह्येते, ऋफिडः, ऋफिड्डः इति तयोः कित्त्वं च कल्प्यते । तथा षण्ढ इत्यत्र सत्वाभावश्चेत्यादि ॥ **संज्ञास्विति** । अनादिसंज्ञास्वेव, न तु सर्वास्वित्याहुः । 'हृषेरुलच्' इति प्रत्ययं दृष्ट्वा शङ्किः प्रकृतिरूह्यते, तेन शङ्कुलेति सिद्धम् । 'ऋ गतौ' इत्यादिभ्यः फिडफिड्डादिप्रत्यया ग्राह्यते॥ **कार्याद्विद्यादिति** । ऋफिड इत्यादौ गुणप्रतिषेधादिकार्यानुरोधादनूबन्धं ककारादिकं विद्यात् । अनूबन्धमित्यत्र 'उपसर्गस्य घञि-' इति दीर्घः । एतदुणादिषु शास्त्रं शासितव्यमित्यर्थः ॥ **भूतेपि दृश्यन्ते** । नन्वेवं वर्तमानग्रहणं च 'उणादयो बहुलम्' इत्यत्र नानुवर्त्यताम् । एतच्चोत्तरसूत्रं च त्यज्यताम् । अविशेषेण कालत्रयेपि प्रत्ययलाभादिति चेत् । अत्राहुः-बाहुल्येन वर्तमाने भवन्ति, भूतभविष्यतोस्तु क्वचिदेवेति विवेकप्रदर्शनार्थमिदमिति ॥ **भविष्यति गम्यादयः** । गमिष्यतीति गमी ग्रामम् । आगमिष्यतीति आगामी । 'गमेरिनिः' 'आङि णित्' इत्याङ्पूर्वस्य तु णित्त्वादुपधावृद्धिः ॥ **भीमः । भीष्मं इति** । 'भियो हेतुभये षुक्' इति मप्रत्ययसंनियोगेन वैकल्पिकः षुक् । प्रस्कन्दत्यस्मादिति प्रस्कन्दनः । अपादाने ल्युट् । प्ररक्षत्यस्मादिति प्ररक्षः, पचाद्यच् । मुह्यत्यस्मादिति मूर्खः । 'मुहेः खो मूर् च' । स्खलत्यस्मादिति खलतिर्निष्केशशिरा इति प्रागुक्तम् ॥ **ताभ्यामितीति** । ताभ्यामित्युक्तौ तु संनिहितापादानस्यैव परामर्शादपादानादन्यत्रेत्यर्थः स्यादिति भावः । **ततोऽसाविति** । तनोतेः कर्त्तरि क्तः । 'अनुदात्तोपदेश'—इत्यनुनासिकलोपः । असौ ततो भवति विस्तृतो भवतीत्यर्थे तनोतेस्तुन् ॥ **वृत्तमिति** । गमनादिना निष्पन्नं वृत्तवर्त्म । वृतेः कर्मणि मनिन् । 'अयनं वर्त्म मार्गः' इत्यमरः ॥ **तुमुन्ण्वुलौ**-। क्रियां अर्थः प्रयोजनं यस्याः सा क्रियार्था तस्याम् ॥ अत्रेदं बोध्यम्-तुमुन्ण्वुलोः क्त्वाविशेषेऽपि 'अव्ययकृतो भावे' इति वचनाद्भावे तुमुन् । ण्वुल् तु कर्त्तरि । क्रियायामिति सप्तमीनिर्देशात्तद्वाचकस्य यातीत्यादेः 'तत्रोपपदं सप्तमीस्थम्' इत्युपपदत्वमिति । **कृष्णं द्रष्टुमिति** । कृष्णकर्मकं भविष्यद्दर्शनं तत्प्रयोजनकं यानमित्यर्थः ॥ **कृष्णं दर्शक इति** । कृष्णकर्मकभविष्यद्दर्शनकर्तृकर्तृकं दर्शनप्रयोजनकं च यानमित्यर्थः । क्रियायां किम्, भिक्षिष्ये इत्यस्य जटाः । इह भिक्षार्थाः जटाः, ताश्च द्रव्यं न तु क्रिया, भिक्षितुं जटा इति प्रयोगस्तु धारयतीत्यध्याहारेण समर्थनीयः । क्रियार्थायां किम्, धावतस्ते पतिष्यति दण्डः । अस्त्यत्र धावत इति क्रिया न त्वसौ दण्डपातनार्था । धावनं तु दण्डपतने हेतुर्भवति न तूद्देश्यमिति दिक् ॥ **समानकर्तृकेषु**-। **अक्रियार्थेति** । भोक्तुमिच्छतीत्यत्र भोजनविषयिणीच्छेति प्रतीयते, न तु भोजनार्थेच्छेति । अतः पूर्वेणात्राप्राप्तिरिति

---

१-संज्ञासु अनादिभूतासु कोशादिप्रसिद्धासु । कार्यात्—गुणनिषेधादिकार्यात् ॥ २-अत्र च भावोऽसत्त्वभूत एव अव्ययार्थे लिङ्गाद्यभावेन प्रत्ययार्थे [illegible] 'भाववचनाच्च' इत्यनेन सत्त्वभूते भावे घञादीनामेव विधानाच्च । इति शब्दरत्नम् ॥

ककर्तृकेषूपपदेषु धातोस्तुमुन् स्यात् । इच्छति भोक्तुम् । वष्टि वाञ्छति वा ॥ (३१५६) शकधृषज्ञाग्लाघटरभलभक्रमसहार्हास्त्यर्थेषु तुमुन् । ३ । ४ । ६५ । एषूपपदेषु धातोस्तुमुन् स्यात् । शक्नोति भोक्तुम् । एवं धृष्णोतीत्यादौ । अर्थग्रहणमस्तिनैव संबध्यते, अनन्तरत्वात् । अस्ति भवति विद्यते वा भोक्तुम् ॥ (३१५७) पर्याप्तिवचनेष्वलमर्थेषु । ३ । ४ । ६६ । पर्याप्तिः पूर्णता । तद्वाचिषु सामर्थ्यवचनेषूपपदेषु तुमुन् स्यात् । पर्याप्तो भोक्तुं प्रवीणः कुशलः पटुरित्यादि । पर्याप्तिवचनेषु किम् । अलं भुक्त्वा । अलमर्थेषु किम् । पर्याप्तं भुङ्क्ते । प्रभूततेह गम्यते न तु भोक्तुः सामर्थ्यम् ॥ (३१५८) कालसमयवेलासु तुमुन् । ३ । ३ । १६७ । पर्यायोपादानमर्थोपलक्षणार्थम् । कालार्थेषूपपदेषु तुमुन् स्यात् । कालः समयो वेला अनेहा वा भोक्तुम् । प्रैषादिग्रहणमिहानुवर्तते तेनेह न—भूतानि कालः पचतीति वार्ता ॥ (३१५९) भाववचनाश्च । ३ । ३ । ११ । भाव इत्यधिकृत्य वक्ष्यमाणा घञादयः क्रियार्थायां क्रियायां भविष्यति स्युः । यागाय याति ॥ (३१६०) अण् कर्मणि च । ३ । ३ । १२ । कर्मण्युपपदे क्रियार्थायां क्रियायां चाण् स्यात् । ण्वुलोऽपवादः । काण्डलावो व्रजति । परत्वादयं कादीन् बाधते । कम्बलदायो व्रजति ॥ (३१६१) पदरुजविशस्पृशो घञ् । ३ । ३ । १६ । भविष्यतीति निवृत्तम् । पद्यतेऽसौ पादः । रुजतीति रोगः । विशतीति वेशः । स्पृशतीति स्पर्शः ॥ (३१६२) सृ स्थिरे । ३ । ३ । १७ । सृ इति लुप्तविभक्तिकम् । सर्तेः स्थिरे कर्तरि घञ् स्यात् । सरति कालान्तरमिति सारः ॥ (वा) व्याधिमत्स्यबलेषु चेति वाच्यम् ॥ अतीसारो व्याधिः । अन्तर्भावितण्यर्थोऽत्र सरतिः । रुधिरादिकमतिशयेन सारयतीत्यर्थः । विसारो मत्स्यः । सारो बले दृढांशे च ॥ (३१६३) भावे । ३ । ३ । १८ । सिद्धावस्थापन्ने धात्वर्थे वाच्ये धातोर्घञ् स्यात् । पाकः । पाकौ ॥ (३१६४) स्फुरतिस्फुलत्योर्घञि । ६ । १ । ४७ । अनयोरेच आत्वं स्याद्घञि । स्फारः । स्फालः । उपसर्गस्य घञीति दीर्घः । परीहारः ॥ (३१६५) इकः काशे । ६ । ३ । १२३ । काशे उत्तरपदे इगन्तस्यैव प्रादेर्दीर्घः । नीकाशः । अनूकाशः । इकः किम् । प्रकाशः । नोदात्तोपदेशेति न वृद्धिः । शमः । आचमादेस्तु । आचामः । कामः । वामः । विश्राम इति त्वपाणिनीयम् ॥ (३१६६) स्यदो जवे । ६ । ४ ।

---

भावः ॥ सूत्रस्थसमानशब्द एकतावचन इत्याह—एककर्तृकेष्विति । एकेति किम्, पुत्रस्य पठनमिच्छति । पुत्रस्येति कर्तरि षष्ठी । पुत्रकर्तृकं पठनमित्यर्थः । इह सूत्रे समानकर्तृकेति पदाभावे पुत्रस्य पठितुमिच्छतीति प्रयोगः स्यात् । देवदत्तं भुञ्जानमिच्छतीति काशिका । अत्र काशिकायामुक्तम्—इच्छन् करोतीत्यत्रानभिधानान्नेति । अत्र निष्कर्षमाहुः—उक्तविषये इच्छन्कर्तुमिति प्रयोगाभावेऽपि इच्छन्कर्तुं गच्छतीत्यादौ तु'तुमुन्ण्वुलौ—'इति सूत्रेण स्यादिति।तच्चिन्त्यम्, करोतीत्यर्थे तुमुनः प्राप्तेरेवाभावात् । तस्य भावार्थकत्वात् ।इह च लटा कर्तृप्रतीतेः । किंचेच्छन्कर्तुमिति प्रयोगो नेष्यते इति रिक्तं वचः । कर्तुमिच्छन्निति प्रयोगस्य सकलसंमतत्वात् । पदानुपूर्व्याश्चाहर पात्रं पात्रमाहरेत्यादाविव स्वेच्छायत्तत्वात् । विस्तरस्त्विह मनोरमादावनुसंधेयः ॥ वष्टीति । 'वश कान्तौ' कान्तिरिच्छेति वशधातुरपीच्छार्थकः ॥ शकधृष—। अयमप्यक्रियार्थोपपदार्थ आरम्भः । भोक्तुं शक्नोति धृष्णोति जानाति इत्यत्र हि भुज्यर्थो विषयतया संबध्यते, नैपुण्यं च गम्यते । ग्लायति भोक्तुमित्यत्र भोजनविषयिण्यग्लानिर्गम्यते । भोक्तुं घटते इत्यत्र तु भोक्तुमर्हतीति योग्यता । आरभते भोक्तुमित्यत्र भोक्तुं प्रक्रमते उत्सहते इति भुजेराद्यावस्था । लभते इत्यत्राप्रत्याख्यानमस्ति भोक्तुमित्यादौ तु संभवमात्रम् । पर्याप्तो भोक्तुमिति । भोक्तुं समर्थ इत्यर्थः ॥ उपलक्षणार्थमिति । तस्य फलमाह—अनेहा इति । 'कालो दिष्टोऽप्यनेहापि' इत्यमरः ॥ तेनेह इति । अनुवादे न भवतीत्यर्थः । यागायेति । यष्टुमित्यर्थः । 'तुमर्थाच्च भाववचनात्' इति चतुर्थी ॥ ण्वुलोऽपवाद इति । 'अव्ययकृतो भावे' इति भावे विहितत्वात्तुमुनः प्राप्तिरेव नास्तीति भावः ॥ पदरुज—। पद्यतेत्वाविति । करणस्य कर्तृविवक्षाऽत्र बोध्या । पद्यते गच्छति येनेति फलितोऽर्थः ॥ सृ स्थिरे । सर्तेरिति । भ्वादेर्जुहोत्यादेश्च ग्रहणम् ॥ स्थिरग्रहणं प्रत्ययार्थस्य कर्तुर्विशेषणं न तूपपदमिति ध्वनयन्नाह—स्थिरे कर्तरीति । अर्द्धर्चादिषु सारशब्दपाठोऽत्र मानम् ॥ व्याधीत्यादि । अस्थिरार्थमिदं वचनम् । तेन विसारो मत्स्य इत्यत्र विविधं सरतीत्यर्थः संगच्छते ॥ अतीसार इति । 'उपसर्गस्य घञि—' इति दीर्घः ॥ सारो बले इति । अत्रापि सृधातुरन्तर्भावितण्यर्थः । सारयति चेष्टयतीत्यर्थानुरोधात् । बलवानेव हि चेष्टते ॥ सिद्धावस्थापन्न इति । पचतीत्यादौ तु साध्यावस्थापन्नो धात्वर्थ इति भावः ॥ आचाम इति । 'नोदात्त—' इति सूत्रे 'अनाचमेः' इत्युक्तत्वादिति भावः ॥ तत्रैव सूत्रे 'अनाचमिकमिवमीनाम्' इति वार्तिकाद्वृद्धिनिषेधो नेत्याह—कामो वाम इति । अपाणिनीयमिति । श्रमेरुदात्तोपदेशत्वात् घञि वृद्धेर्दुर्लभत्वात् । यदि तु 'धुर्यान्विश्रामय' इत्यादिवण्णिचि वृद्धिमाश्रित्य णिजन्तादेरच् क्रियते, तदा रूपं सिध्यति । न च

---

१-भाववचनाश्चेति—वक्ष्यमाणानां प्रत्ययानां घञादीनां विशेषविहितेन तुमुना बाधाभावायेदं सूत्रम् । न च वासरूपविधिनापि तेऽपि भविष्यन्तीति वाच्यम्, पूर्वसूत्रघटकण्वुल्ग्रहणेन क्रियार्थायां क्रियायामुपपदे वासरूपन्यायेन तृजादयो नेत्युक्तत्वेन घञपि न स्यादित्याशयात् ॥

२८। स्यन्देर्घञि नलोपो वृद्ध्यभावश्च निपात्यते । स्यदो वेगः । अन्यत्र स्यन्दः ॥ **अवोदैधौद्मप्रश्रथहिमश्रथाः** । ६ । ४ । २९ । अवोदः अवक्लेदनम् । एध इन्धनम् । ओद्म उन्दनम् । श्रन्थेर्नलोपो वृद्ध्यभावश्च ॥ **अकर्तरि च कारके संज्ञायाम्** । ३ । ३ । १९ । कर्तृभिन्ने कारके घञ् स्यात् ॥ **घञि च भावकरणयोः** । ६ । ४ । २७ । रञ्जेर्नलोपः स्यात् । रागः । अनयोः किम् । रज्यत्यस्मिन् रङ्गः । प्रास्यते इति प्रासः । संज्ञायामिति प्रायिकम् । को भवता लाभो लब्धः । इत उत्तरं भावे अकर्तरि कारक इति कृत्यल्युटो बहुलमिति यावद् द्वयमप्यनुवर्तते ॥ **परिमाणाख्यायां सर्वेभ्यः** । ३ । ३ । २७ । घञ् । अजपोर्बाधनार्थमिदम् । एकस्तण्डुलनिचायः । द्वौ शूर्पनिष्पावौ । द्वौ कारौ ॥ **दारजारौ कर्तरि णिलुक्च** ॥ दारयन्तीति दाराः । जारयन्तीति जाराः ॥ **इङश्च** । ३ । ३ । २१ । घञ् । अचोऽपवादः । उपेत्य अस्मादधीयते उपाध्यायः ॥ **अपादाने स्त्रियामुपसंख्यानं तदन्ताच्च वा ङीष्** ॥ उपाध्याया । उपाध्यायी ॥ **शॄ वायुवर्णनिवृत्तेषु** ॥ शॄ इत्यवि-

---

णिच्यपि वृद्धिनिषेधः शङ्क्यः, 'नोदात्त–' इत्यत्र कृतीत्यनुवृत्त्या णिचि निषेधाभावात् । न चैवमपि मितां ह्रस्वः स्यादितिशङ्क्यम्, वेत्यनुवर्त्य व्यवस्थितविभाषाश्रयणेन ह्रस्वाभावसिद्धेः । परन्तु णिजन्तकल्पनायामर्थो भिद्यते इति भावः । वस्तुतस्तु निवृत्तप्रेषणाद्धातोः प्राकृतेऽर्थे णिजिति विवक्षायां तु न दोष इत्यवधेयम् । एवं च ' रोगी चिरप्रवासी परान्नभोजी परावसथशायी । यज्जीवति तन्मरणं यन्मरणं सोस्य विश्रामः' इत्यादिकविप्रयोगाः साधव एवेति बोध्यम् ॥ **अवोदै–अवोद इति** । 'उन्दी क्लेदने ' अवपूर्वः । घञि नलोपो निपात्यते ॥ **एध इति** । इन्धेर्घञि नलोपो गुणश्च निपात्यते 'न धातुलोप–' इति निषेधादप्राप्तगुणस्य निपातनमिति ज्ञेयम् ॥ **ओद्म इति** । उन्देरौणादिके मन्प्रत्यये नलोपो गुणश्चात्रापि निपात्यते ॥ **श्रन्थेरिति** । प्रपूर्वस्य हिमपूर्वस्य च घञि निपात्यते इति बोध्यम् ॥ **प्रायिकमिति** । सर्वात्मना संज्ञाग्रहणत्यागे कृतः कट इत्यत्र कारः कट इति स्यादिति भावः । भाष्ये त्वनभिधानमाश्रित्य प्रत्याख्यातम् ॥ **परिमाणाख्यायाम्–** । सर्वेभ्यो धातुभ्यः । परिमाणं परिच्छित्तिः । आख्यानमाख्या उक्तिः । परिच्छित्तेरुक्तौ सत्यामित्यर्थः । कस्य पुनः परिच्छित्तिरिति चेत्प्रत्ययार्थस्येत्युच्यते । आख्याग्रहणं रूढिनिरासार्थम् । तेन परिमाणग्रहणेन संख्या च गृह्यते । सर्वेभ्यः किम्, अन्यथा 'पुरस्तादपवाद–' न्यायेनाचमेव घञ् बाधेत न त्वपम् ॥ **तण्डुलनिचाय इति** । निचीयते राशीक्रियते इति निचायः। अत्र राश्येकत्वेन समुदायिनां परिच्छित्तिरर्थाद्गम्यते । 'एरच्' इत्यचि प्राप्ते । घञ् । निष्पूयते शोध्यते तुषाद्यपनयनेन यस्तण्डुलादिः स निष्पावः 'ॠदोरप्' इत्यपि प्राप्ते घञ् । शूर्पेणेति करणतृतीयान्तस्य 'कर्तृकरणे कृता बहुलम्' इति समासः । अत्र शूर्पसंख्यया तण्डुलादेरपि परिच्छित्तिः । शूर्पद्वित्वं तु आर्थिकं, न तु शाब्दं, निष्पावगतद्वित्वं तु शाब्दम् । यद्यप्यत्र 'निरभ्योः पूल्वोः' इति घञ् लभ्यते, तथापि सर्वग्रहणबलादनेनापि भवितुमर्हतीति भावः ॥ अप्प्रत्ययस्य मुख्योदाहरणमाह–**द्वौ काराविति** । 'कॄ विक्षेपे' । कर्मणि घञ् । शूर्पादिना विक्षिप्तो धान्यादिराशिः कारः । इह प्रकृत्याश्रय एवापवादो न त्वर्थाश्रयः, सर्वेभ्य इति पञ्चमीनिर्देशेन तथैवावगमात्, तेनायं प्रकृत्याश्रयो घञ् क्तिनोऽपवादो न भवति । एका तिलोच्छ्रितिः । उत्पूर्वकाच्छ्रयतेः कर्मणि भावे वा क्तिन् । ऊर्ध्वीकृतो राशीकृत इत्यर्थः । तदेतत्सूचयितुमुक्तम्–**अजपोरपवाद इति** । तयोरपि प्रकृत्याश्रयत्वादपवादयोः समानविषयौचित्यात् । 'स्त्रियां क्तिन्' त्वर्थाश्रय इति दिक् ॥ **दारजाराविति** । 'अकर्तरि कारके' इत्यधिकारात् 'ॠदोरप्' इत्यस्य घञपवादत्वाच्च कर्तरि घञर्थमिदं वचनम् ॥ **णिलुक् चेति** । चात् घञ् । लोपे हि सति घञाश्रया वृद्धिर्न स्याण्णिलोपस्य स्थानिवद्भावेन व्यवधानात् । न च णिञ्जिमित्तैव वृद्धिरस्त्विति वाच्यम्, जारशब्दे ' मितां ह्रस्वः ' इति ह्रस्वापत्तेः । ' जनीजॄष्–' इति जॄधातोर्णौ मित्त्वात् । लुकि सति तस्य परनिमित्तत्वाभावेन ' क्विलुगुपध–' इति कौ लुप्तस्य निषेधेन वा स्थानिवत्त्वाभावाज्जार इति रूपं सिध्यतीति भावः । एतेन दीर्यंते यैस्ते दाराः, जीर्यतेऽनेनेति जार इत्यण्यन्ताभ्यामेव करणे घञस्तु, किमनेन वचनेनेति केषांचिदुक्तिः परास्ता । ' ॠदोरप् ' इत्यपवादविषये उत्सर्गस्य घञो दुर्लभत्वात् । स्त्र्यधिकारादूर्ध्वं वासरूपविधेरनङ्गीकारादपवादोऽप्यच् 'करणाधिकरणयोः–' इति ल्युटा बाधादिह दुर्लभ इत्यन्यदेतत् ॥ **उपेत्येति** । गुरुसमीपमेत्येत्यर्थः ॥ **अपादाने इति** । 'पुरस्तादपवाद–' न्यायेन ' इङश्च ' इत्यस्याच एवापवादत्वात्स्त्रियां तु क्तिन् स्यादिति तद्बाधनायायमारम्भः । ' घञनुक्रमणमजपोर्विषये ' इति वचनात्स्त्रियां घञ् न स्यादिति स्त्रियांग्रहणम् ॥ **उपाध्यायेति** ।

---

१–**श्रन्थेरिति**—प्रहिमान्यतरपूर्वस्येत्यादिः ॥ २–**अकर्तरि चेति**—चकारस्य संज्ञायामित्युत्तरं योजना बोध्येत्याशयेनाह–**प्रायिकमिति** ॥ ३–**भाष्ये त्विति**—तत्र हि—संज्ञाग्रहणमनर्थकमसंज्ञायामपि घञ् दृश्यते–को भवता लाभो लब्धः । को भवता दायो दत्त इति । यदि संज्ञाग्रहणं न क्रियतेऽतिप्रसङ्गो भवति कृतः कट इत्यत्र कारः कट इति प्राप्नोति । अतिप्रसङ्ग इति चेत् ॥ तन्न, किं कारणम्, अनभिधानलक्षणत्वात् प्रत्ययस्य सिद्धम् । अभिधानलक्षणाः कृत्तद्धितसमासाः । अनभिधानान्न भविष्यत्तीत्युक्तम् ॥

भक्तिको निर्देशः । शारो वायुः। करणे घञ् । शारो वर्णः। चित्रीकरणमिह धात्वर्थः । निव्रियते आव्रियतेऽनेनेति निवृतमावरणम् । बाहुलकात्करणे क्तः । गौरिवाकृतनीशारः प्रायेण शिशिरे कृशः । अकृतप्रावरण इत्यर्थः ॥ (सू) उपसर्गे रुवः । ३ । ३ । २२ । घञ् । संरावः । उपसर्गे किम् । रवः ॥ (सू) अभिनिसः स्तनः शब्दसंज्ञायाम् । ८ । ३ । ८६ । अस्मात् स्तनेः सस्य मूर्धन्यः । अभिनिष्टानो वर्णः । शब्दसंज्ञायां किम् । अभिनिःस्तनति मृदङ्गः ॥ (सू) समि युद्रुदुवः । ३ । ३ । २३ । संयूयते मिश्रीक्रियते गुडादिभिरिति संयावः पिष्टविकारोऽपूपविशेषः । सन्द्रावः । सन्दावः ॥ (सू) श्रिणीभुवोऽनुपसर्गे । ३ । ३ । २४ । श्रायः । नायः । भावः । अनुपसर्गे किम् । प्रश्रयः । प्रणयः। प्रभवः । कथं प्रभावो राज्ञ इति । प्रकृष्टो भाव इति प्रादिसमासः । कथं राज्ञो नय इति । बाहुलकात् ॥ (सू) वौ क्षुश्रुवः । ३ । ३ । २५ । विक्षावः । विश्रावः । वौ किम् । क्षवः । श्रवः ॥ (सू) अवोदोर्नियः । ३ । ३ । २६ । अवनायः अधोनयनम् । उन्नायः ऊर्ध्वनयनम् । कथमुन्नयः उत्प्रेक्षेति । बाहुलकात् ॥ (सू) प्रे द्रुस्तुस्रुवः । ३ । ३ । २७ । प्रदावः । प्रस्तावः । प्रस्रावः । प्रे इति किम् । द्रवः । स्तवः । स्रवः ॥ (सू) निरभ्योः पूल्वोः । ३ । ३ । २८ । निष्पूयते शूर्पादिभिरिति निष्पावो धान्यविशेषः । अभिलावः । निरभ्योः किम् । पवः । लवः ॥ (सू) उन्न्योर्ग्रः । ३ । ३ । २९ । उद्गारः । निगारः । उन्न्योः किम् । गरः ॥ (सू) कॄ धान्ये । ३ । ३ । ३० । कॄ इत्यस्माद्धान्यविषयकादुन्न्योर्घञ् स्यात् । उत्कारो निकारो धान्यस्य । विक्षेप इत्यर्थः । धान्ये किम् । भिक्षोत्करः । पुष्पनिकरः ॥ (सू) यज्ञे समि स्तुवः । ३ । ३ । ३१ । समेत्य स्तुवन्ति यस्मिन् देशे छन्दोगाः स देशः संस्तावः । यज्ञे किम् । संस्तवः परिचयः ॥ (सू) प्रे स्त्रोऽयज्ञे । ३ । ३ । ३२ । अयज्ञे इति च्छेदः । यज्ञे इति प्रकृतत्वात् । प्रस्तारः । अयज्ञे किम् । बर्हिषः प्रस्तरो मुष्टिविशेषः ॥ (सू) प्रथने वावशब्दे । ३ । ३ । ३३ । विपूर्वात् स्तृणातेर्घञ् स्यादशब्दविषये प्रथने । पटस्य विस्तारः । प्रथने किम् । तृणविस्तरः । अशब्दे किम् । ग्रन्थविस्तरः ॥ (सू) छन्दोनाम्नि च । ३ । ३ । ३४ । स्त्रं इत्यनुवर्तते । विष्टारपङ्क्तिश्छन्दः । विस्तीर्यन्तेऽस्मिन्नक्षराणीत्यधिकरणे घञ् । ततः कर्मधारयः ॥ (सू) छन्दोनाम्नि च । ८ । ३ । ९४ । विपूर्वात् स्तृणातेर्घञन्तस्य सस्य षत्वं स्याच्छन्दोनाम्नि । इति षत्वम् ॥ (सू) उदि ग्रहः । ३ । ३ । ३५ । उद्ग्राहः (सू) समि मुष्टौ । ३ । ३ । ३६ । मल्लस्य संग्राहः । मुष्टौ किम् । द्रव्यस्य संग्रहः ॥ (सू) परिन्योर्नीणोर्द्यूताभ्रेषयोः । ३ । ३ । ३७ । परिपूर्वान्नयतेर्निपूर्वादिणश्च घञ् स्यात् । क्रमेण द्यूतेऽभ्रेषे च विषये । परिणायेन शारान् हन्ति । समन्तान्नयनेनेत्यर्थः । एषोऽत्र न्यायः । उचितमित्यर्थः । द्यूताभ्रेषयोः किम् । परिणयो विवाहः । न्ययो नाशः ॥ (सू) परावनुपात्यय इणः । ३।३।३८ । क्रमप्राप्तस्य अनतिपातोऽनुपात्ययः । तव पर्यायः । अनुपात्यये किम् । कालस्य पर्ययः । अतिपात इत्यर्थः ॥ (सू) व्युपयोः शेतेः पर्याये । ३ । ३ । ३९ । तव विशायः । तव राजोपशायः । पर्याये किम् । विशयः संशयः । उपशयः समीपशयनम् ॥ (सू) हस्तादाने चेरस्तेये । ३ । ३ । ४० । हस्तादान इत्यनेन प्रत्यासत्तिरादेयस्य लक्ष्यते । पुष्पप्रचायः । हस्तादाने किम् । वृक्षाग्रस्थानां फलानां यष्ट्या प्रचयं करोति । अस्तेये किम् । पुष्पप्रचयश्चौर्येण ॥ (सू) निवासचितिशरीरोपसमाधानेष्वादेश्च कः । ३ । ३ । ४१ । एषु चिनोतेर्घञ् आदेश्च ककारः । उपसमाधानं राशीकरणं तच्च धात्वर्थः । अन्ये प्रत्ययार्थस्य कारकस्योपाधिभूताः । निवासे—

---

या स्वयमध्यापयति तस्यामिदं रूपद्वयम् । पुंयोगे तु ङीषेव । आनुगागमश्च पाक्षिक इत्युक्तम् ॥ **करणे इति ।** 'वृञ् वरणे' इत्यस्मादित्यर्थः ॥ **नीशार इति ।** 'उपसर्गस्य घञि'—इति दीर्घः । ननु 'प्रदक्षिणप्रसव्यगामिनां शाराणाम्' इति कथं प्रयोगः । 'वायुवर्ण—' इत्यर्थपरिगणनादिति चेत् । अत्राहुः—अत एव वार्तिकप्रयोगादक्षेष्वपि शृणातेर्घञ् ॥ 'णीञ् प्रापणे' इत्यस्मात् 'अचो यत्' ॥ **यज्ञे समि—।** **रव इति ।** 'ऋदोरप्' इत्यप् ॥ **राज्ञो नय इति ।** 'शब्दविषयत्वात्पूर्वेणाप्राप्ते वचनम्' केचित्तु प्रस्तारपङ्क्तिरित्यादिप्रयो अधिकरणे ल्युटोऽपवादोऽयं घञ् ॥ **छन्दो—** गानुरोधेनात्र वाविति नानुवर्तयन्ति॥ **उदि ग्रहः ।** भावादौ घञ् स्यात् । 'ग्रहवृद—' इति प्राप्तस्यापोऽपवादः॥ **परिन्योः ।** अक्षादिभिः क्रीडनं द्यूतम् । यथाप्राप्तकरणमभ्रेषः ॥ **परावनु—।** अत्र व्याचख्युः द्विःपरिग्रहणमिह व्यर्थं सकृदेव कर्तुं शक्यम् । तथा हि 'परौ नियो द्यूते', 'इणोऽनुपात्यये', 'नावभ्रेषे' । इह इण इत्यनुवर्तनात् 'इणोऽनुपात्यये' इत्यत्र तु परावित्यनुवर्तनाच्चेष्टं सिध्यतीति भावः । ननु पूर्वसूत्रेऽनुपात्ययः पर्यायार्थकत्वेन व्याख्यातः, तथा च तदनुवृत्त्यैव सिद्धे पर्यायग्रहणमिह व्यर्थमिति चेत् । अत्राहुः—पर्यायग्रहणं पुनर्विधानार्थम् । तेनात्राभिविधिविवक्षायां परमपि अभिविधौ

---

१ एकदेशं तु वेदस्य वेदाङ्गान्यपि वा पुनः । योऽध्यापयति वृत्त्यर्थमुपाध्यायः स उच्यते' इति मन्वेकवाक्यतया वेदैकदेशवेदाङ्गान्यतरत्कर्म बोध्यम् । एवं [illegible] स्त्रीणां वेदाध्ययनेऽधिकारः सूचितो भवति । अत एव कठी बह्वृची अध्वर्युरित्यादिव्यवहाराः ॥ २ 'एरच्' इति सूचितम् । 'अचो यत्' इत्यस्योपन्यासस्तु भ्रममूलकः ॥

काशी निकायः। चितौ-आकायमग्निं चिन्वीत। शरीरे-चीयतेऽस्मिन्नस्थ्यादिकमिति कायः। समूहे-गोमयनिकायः। एषु किम्। चयः। चः क इति वक्तव्ये आदेरित्युक्तेर्यङ्लुक्यादेरेव यथा स्यादिति। गोमयानां निकेचायः। पुनः पुना राशीकरणमित्यर्थः॥ (सू) सङ्घे चानौत्तराधर्ये। ३। ३। ४२। चेर्घञ् आदेश्च कः। भिक्षुनिकायः। प्राणिनां समूहः सङ्घः। अनौत्तराधर्ये किम्। सूकरनिचयः। सङ्घे किम्। ज्ञानकर्मसमुच्चयः॥ (सू) कर्मव्यतिहारे णच् स्त्रियाम्। ३। ३। ४३। स्त्रीलिङ्गे भावे णच्। णचः स्त्रियामञ्॥ (सू) न कर्मव्यतिहारे। ७। ३। ६। अत्र ऐच् न स्यात्। व्यावक्रोशी। व्यावहासी॥ (सू) अभिविधौ भाव इनुण्। ३। ३। ४४। अणिनुणः। इन-ण्यनपत्ये। सांराविणं वर्तते॥ (सू) आक्रोशेऽवन्योर्ग्रहः। ३। ३। ४५। अव नि एतयोर्ग्रहेर्घञ् स्यात् शापे। अवग्राहस्ते भूयात्। अभिभव इत्यर्थः। निग्राहस्ते भूयात्। बाध इत्यर्थः। आक्रोशे किम्। अवग्रहः पदस्य। निग्रहश्चोरस्य॥ (सू) प्रे लिप्सायाम्। ३। ३। ४६। पात्रप्रग्राहेण चरति भिक्षुः॥ (सू) परौ यज्ञे। ३। ३। ४७। उत्तरः परिग्राहः। स्फ्येन वेदेः स्वीकरणम्॥ (सू) नौ वृ धान्ये। ३। ३। ४८। वृ इति लुप्तपञ्चमीकम्। नीवाराः। धान्ये किम्। निवरा कन्या। क्तिन्विषयेऽपि बाहुलकादप्। प्रवरा सेतिवत्॥ (सू) उदि श्रयतियौतिपूद्रुवः। ३। ३। ४९। उच्छ्रायः। उद्यावः। उत्पावः। उद्द्रावः। कथं पतनान्ताः समुच्छ्रया इति। बाहुलकात्॥ (सू) विभाषाऽऽङि रुप्लुवोः। ३। ३। ५०। आरावः, आरवः। आप्लावः, आप्लवः॥ (सू) अवे ग्रहो वर्षप्रतिबन्धे। ३। ३। ५१। विभाषेति वर्तते। अवग्रहः। अवग्राहः। वर्षप्रतिबन्धे किम्। अवग्रहः पदस्य॥ (सू) प्रे वणिजाम्। ३। ३। ५२। प्रे ग्रहेर्घञ् वा वणिजां संबंधी चेत्प्रत्ययार्थः। तुलासूत्रमिति यावत्। तुलाप्रग्राहेण चरति।

---

भाव इनुण् इति इनुणं बाधित्वाऽयमेव घञ् भवतीति॥ आकायमिति। आचीयन्तेऽस्मिन्निष्टका इत्याकायम्। अधिकरणे घञ्। अग्निस्थलविशेषं चिन्वीत, चयनेन निष्पादयेदिति श्रुत्यर्थः॥ सङ्घे चानौत्तराधर्ये। उत्तरे चाधरे चोत्तराधरास्तेषां भाव औत्तराधर्यम्॥ सूकरेति। स्तनपानार्थमुत्तराधरभावेन सूकराः शेरते तदेतत्प्रत्युदाहरणम्। यदा तु भिक्षुवत्पृथक्पृथगेवावतिष्ठन्ते, तदा भवत्येव घञिहापि॥ कर्मव्यतिहारे णच्-। कर्मव्यतिहारः क्रियाव्यतिहारः। परस्परकरणमिति यावत्। तत्र वर्तमानाद्धातोरित्यर्थः॥ भावे णजिति। कर्तृवर्जिते कारके न भवत्यनभिधानादित्याहुः। भावादाविति प्राचोक्तं यत्तदुपेक्ष्यमाकरविरोधात्॥ णचः स्त्रि-। अनेन णजिति चकारोऽत्र विशेषणार्थ इति ध्वनितम्॥ स्त्रियां किम्। व्यतिपाको वर्तते॥ ऐच् नेति। 'न य्वाभ्याम्—' इति प्राप्तस्य निषेधेनादिवृद्धिरेव। णचस्तद्धितत्वाभावेऽप्यञस्तद्धितत्वादिति भावः॥ 'कृद्ग्रहण-' परिभाषया सोपसर्गधातोर्णजन्तत्वात्ततोऽञि तत्प्रयुक्तादिवृद्धिरुपसर्गस्येत्याशयेनोदाहरति-व्यावक्रोशीति। 'कुश आह्वाने'। 'हसे हसने'। स्यादेतत्, 'स्त्रियां क्तिन्' इति प्रकरण एवायं णज्विधेयः। एवं च स्त्रियामिति न कर्तव्यमिति लाघवमिति चेत्। मैवम्, स्त्रियामित्यधिकारे वासरूपविधिनिषेधापत्तेः। इष्यते तु व्यावकुष्टिरिति स्त्रियां क्तिन्नपि, अपवादविषये क्वचिदिष्यते, व्यावचोरी। इह 'ण्यासश्रन्थः-' इति युच् प्राप्तः। व्यात्युक्षी अत्र 'गुरोश्च हलः' इत्यकारप्रत्ययः प्राप्तः। क्वचिदकार एवेष्यते न तु णच्, व्यतीक्षा, व्यतीहा। सैषा व्यवस्था न्यायतो दुर्लभापि बाहुलकात्स्वीकार्या॥ अभिविधौ-। अभिविधौ किम् संरावः। वासरूपेण घञ् क्तश्च न भवति, पुनर्भावग्रहणात्। न च कर्तृभिन्नकारकनिवृत्तये भावग्रहणमिति वाच्यम्, पूर्वसूत्र इव शक्तिस्वाभाव्यादेवेनुणोऽप्रवृत्तेः। ल्युटा तु समावेश इष्यते संरवणमिति। तच्च बाहुलकाल्लभ्यत इत्याकरः॥ अणिनुणः। अत एवेनुणो णानुबन्धो विशेषणार्थ इति ध्वनितम्॥ सांराविणमिति। समन्ताच्छब्द इत्यर्थः। संशब्दोऽभिविधिद्योतकः। पूर्ववत्सगतिकादण्, अणस्तद्धितत्वादादिवृद्धिः। 'इनण्यनपत्ये' इत्यनपत्याणि इनः प्रकृतिभावात् 'नस्तद्धिते' इति टिलोपेन न निवृत्तिः। स्वभावतश्चेदमणिनुणन्तं नपुंसकम्॥ आक्रोशे-। 'ग्रहवृद' इत्यपि प्राप्तेऽयमारम्भः॥ अवग्रहः पदस्येति। छेदविशेष इत्यर्थः। निग्रहो निरोधः॥ प्रे लिप्सायाम्। लिप्सायां किम्, देवदत्तस्य प्रग्रहः। प्रकृष्टो विनिवेश इत्यर्थः॥ पात्रप्रग्राहेणेति। भिक्षापात्रोपादानेन पात्रं गृहीत्वेति यावत्॥ नौ वृ-। नौ उपपदे वृञो भावादौ घञ् स्यात्॥ निवरा कन्येति। 'ग्रहवृद-' इत्यादिना कर्मण्यप्॥ ननु स्त्रीत्वविशिष्टे कर्मणि परत्वात् क्तिना भाव्यम् 'अजब्भ्यां स्त्रीखलनाः' इत्युक्तेरत आह-क्तिन्विषयेऽपीति।

---

१ अवग्रहः पदस्येति-'ग्रहवृदनिश्चि—' इत्यप्। अत्रावग्रहो विलम्बेनोच्चारणम्। स्वाभाविककार्यमात्राधिककालेनोच्चारणात्मकम्॥ २ निरोध इति-देशान्तरसंचारविरोधिव्यापारानुकूलव्यापारश्चोरस्येत्यर्थः॥

तुलाप्रग्रहेण ॥ **रश्मौ च । ३ । ३ । ५३** । प्रग्रहः । प्रग्राहः ॥ **वृणोतेराच्छादने । ३ । ३ । ५४** । विभाषा प्र इत्येव । प्रवारः । प्रवरः ॥ **परौ भुवोऽवज्ञाने । ३ । ३ । ५५** । परिभावः । परिभवः । अवज्ञाने किम् । सर्वतोभवनं परिभवः ॥ **एरच् । ३ । ३ । ५६** । चयः । जयः ॥ **भयादीनामुपसंख्यानम्** ॥ नपुंसके क्तादिनिवृत्त्यर्थम् ॥ भयम् । वर्षम् ॥ **ऋदोरप् । ३ । ३ । ५७** । ऋवर्णान्तादुवर्णान्तादप् । करः । गरः । शरः । यवः । लवः । स्तवः । पवः ॥ **वृक्षासनयोर्विष्टरः । ८ । ३ । ९३** । अनयोर्विपूर्वस्य स्तः षत्वं निपात्यते । विष्टरो वृक्ष आसनं च । वृक्षेत्यादि किम् । वाक्यस्य विस्तरः ॥ **ग्रहवृदृनिश्चिगमश्च । ३ । ३ । ५८** । अप् स्यात् । घञचोरपवादः । ग्रहः । वरः । दरः । निश्चयः । गमः ॥ **वशिरण्योरुपसंख्यानम्** ॥ वशः । रणः ॥ **घञर्थे कविधानम्** ॥ प्रस्थः । विघ्नः ॥ **द्वित्वप्रकरणे के कृञादीनामिति वक्तव्यम्** ॥ चक्रम् । चिक्लिदम् । चक्नसः ॥ **उपसर्गेऽदः । ३ । ३ । ५९** । अप् स्यात् ॥ **घञपोश्च । २ । ४ । ३८** । अदेर्घस्लृ स्यात् घञि अपि च । प्रघसः । विघसः । उपसर्गे किम् । घासः ॥ **नौ ण च । ३ । ३ । ६०** । नौ उपपदे अदेर्णः स्यादप् च । न्यादः । निघसः ॥ **व्यधजपोरनुपसर्गे । ३ । ३ । ६१** । अप् स्यात् । व्यधः । जपः । उपसर्गे तु आव्याधः । उपजापः ॥ **स्वनहसोर्वा । ३ । ३ । ६२** । अप् । पक्षे घञ् । स्वनः । स्वानः । हसः । हासः । अनुपसर्ग इत्येव । प्रस्वानः । प्रहासः ॥ **यमः समुपनिविषु च । ३ । ३ । ६३** । एषु अनुपसर्गे च यमेरप् वा । संयमः । संयामः । उपयमः । उपयामः । नियमः । नियामः । वियमः । वियामः । यमः । यामः ॥ **नौ गदनदपठस्वनः । ३ । ३ । ६४** । अप् वा स्यात् । निगदः । निगादः । निनदः । निनादः । निपठः । निपाठः । निस्वनः । निस्वानः ॥ **क्वणो वीणायां च । ३ । ३ । ६५** । नावनुपसर्गे च वीणाविषयाच्च क्वणतेरप् वा स्यात् । वीणाग्रहणं प्राद्यर्थम् । निक्वणः । निक्वाणः । क्वणः । क्वाणः । वीणायां तु प्रक्वणः । प्रक्वाणः ॥ **नित्यं पणः परिमाणे । ३ । ३ । ६६** । अप् स्यात् । मूलकपणः । शाकपणः । व्यवहारार्थं मूलकादीनां परिमितो मुष्टिर्बध्यते सोऽस्य विषयः । परिमाणे किम् । पाणः ॥ **मदोऽनुपसर्गे । ३ । ३ । ६७** । धनमदः । उपसर्गे तु । उन्मादः ॥ **प्रमदसम्मदौ हर्षे । ३ । ३ । ६८** । हर्षे किम् । प्रमादः । संमादः ॥ **समुदोरजः पशुषु । ३ । ३ । ६९** । संपूर्वोऽजिः समुदाये उत्पूर्वश्च प्रेरणे तस्मात्पशुविषयकादप् स्यात् । अघञपोरित्युक्तेर्वीभावो न । समजः पशूनां सङ्घः । उदजः पशूनां प्रेरणम् । पशुषु किम् । समाजो ब्राह्मणानाम् । उदाजः क्षत्रियाणाम् ॥ **अक्षेषु ग्लहः । ३ । ३ । ७०** । अक्षशब्देन देवनं लक्ष्यते, तत्र यत्पणरूपेण ग्राह्यं तत्र ग्लह इति निपात्यते । अक्षस्य

---

एवं च प्रायेण भावार्थ एव 'घञजवन्ताः पुंसि' इति द्रष्टव्यम् ॥ **रश्मौ च** । रथादियुक्तानामश्वानां संयमनार्था रज्जू रश्मिः' तस्यामभिधेयायां प्रे उपपदे ग्रहेर्घञ् स्याद्वावादौ । इह द्विःकृत्वो प्रहिरुपात्तः सकृदेव तु वक्तुं शक्यः । तथा हि—'उदि ग्रहः' 'समि मुष्टौ' 'आक्रोशेऽवन्योः—' 'प्रे लिप्सायाम्', 'परौ यज्ञे', 'अवे वर्षप्रतिबन्धे विभाषा', 'प्रे वणिजाम्' इत्यादि 'परौ भुवोऽवज्ञाने' इत्यस्यानन्तरम् 'आङि रुप्लुवोः' इत्यस्तु, तथा तु न कृतमित्येव ॥ **वृणोतेः—। प्रावार इति** । 'उपसर्गस्य घञ्यमनुष्ये बहुलम्' इत्युपसर्गस्य दीर्घः । आच्छादने किम्, प्रवरो गौः, प्रशस्त इत्यर्थः ॥ **परिभाव इति** । 'अनादरः परिभवः परीभावस्तिरस्क्रिया' इत्यमरः । परत्वाद्धि ल्युटौ प्राप्तौ । तथा च पूर्वविप्रतिषेधोऽयं फलितः । एवं च वासरूपन्यायोऽत्र न प्रवर्तते; अनपवादत्वादिति भावः । **वर्षमिति** । 'वृषभो वर्षणात्' इति भाष्यप्रयोगात्तु ल्युडपि । वर्षणम् ॥ **ऋदोरप्** । ऋच उश्च तयोः समाहारे सौत्रं पुंस्त्वम् । 'ऋदोः' इत्ययं न तकारः किं तर्हि दकारः ॥ 'निरभ्योः पूल्वोः' इत्यपवादतया घञ्विधानाज्ज्ञापकाद्दीर्घान्तादप्युदाहरति—**लवः पव इति** ॥ **घञचोरपवाद इति** । निश्चय इत्यत्राचः प्राप्तिरन्यत्र घञ इति विवेकः । हस्तादाने तु प्रपूर्वकाच्चिनोतेर्घञुदाहृतः ॥ **वशिरण्योरिति** । घञि प्राप्ते वचनम् । वशनं वशः । रणन्ति शब्दं कुर्वन्त्यस्मिन्निति रणः संग्रामः ॥ व्यद्यते विशेषेण भक्ष्यते इति विघसो वैश्वदेवशिष्टमन्नम् । ' शब्दे निनादनिनदध्वनिध्वानरवस्वनाः । **स्वान—**' ' शष्पं बालतृणं घासः ' इत्यमरः ॥ **उपजापो** मन्त्रभेदः ॥ ' इत्यमरः ॥ **क्वणो—। 'निक्वाणो निक्वणः क्वाणः क्वणः** क्वणनमित्यपि । वीणायाः क्वणिते प्रादेः **प्रक्वाणप्रक्वणादयः**' इत्यमरः ॥ **मदो—।** अनुपसर्गे सुप्युपपदे नित्यमप् स्याद्वावादौ ॥ **प्रमद—।** ' प्रसंभ्यां हर्षे ' इति नोक्तम् । प्रसंमदः । इत्यमरः ॥

---

१ **रण इति**—अत्र रणन्त्यस्मिन् पुरुषाः स रणः संग्रामः इत्यर्थेन 'अकर्तरि च कारके' इत्यनेन प्राप्तस्य घञो बाधकोऽपू विधीयते । वश इत्यत्रापि भावे घञ् प्राप्तो बाध्यते ॥ २ **प्रस्थ इति**—अत्राधिकरणे कः । परिमाणविशेषस्य सानोश्च संज्ञेयम् । प्रतिष्ठन्त्यस्मिन् धान्यानि प्रतिष्ठन्ते जना अस्मिन्निति व्युत्पत्तेः । 'प्रस्थ हिमवतः शृङ्गे' इति क्वाचित्कः प्रयोगो न तु तस्यैव संज्ञा, 'स्नुः प्रस्थः सानुरस्त्रियाम्' इति कोशात् ॥ ३ **विघ्न इति**—विघ्नन्ति मनांसि यस्मिन् इत्यधिकरणे के 'गमहन्ते—' इत्युपधालोपे 'हो हन्तेः' इति कुत्वम् ॥ ४ वीणाग्रहणस्यानुपसर्ग इत्येतद्बाधरूपं प्रयोजनमाह— **वीणाग्रहणमिति** । 'वीणाग्रहणं सोपसर्गार्थम्' इति । वार्तिककारोक्तेः ॥

ग्लहः । व्यात्युक्षीमभिसरणग्लहामदीव्यन् । अक्षेषु किम् । पादस्य ग्रहः ॥ (सू) प्रजने सर्तेः । ३ । ३ । ७१ । प्रजनं प्रथमगर्भग्रहणम् । गवामुपसरः । कथमवसरः प्रसर इति । अधिकरणे पुंसि संज्ञायामिति घः ॥ (सू) ह्वः संप्रसारणं च न्यभ्युपविषु ।३ ।३।७२। निहवः। अभिहवः । उपहवः। विहवः।एषु किम् । प्रह्वायः ॥ (सू) आङि युद्धे । ३ । ३ । ७३ । आहूयन्तेऽस्मिन्नित्याहवः । युद्धे किम् । आह्वायः ॥ (सू) निपानमाहावः । ३ । ३ । ७४ । आङ्पूर्वस्य ह्वयतेः संप्रसारणमप् वृद्धिश्चोदकाधारश्चेद्वाच्यः । आहावस्तु निपानं स्यादुपकूपजलाशये ॥ (सू) भावेऽनुपसर्गस्य । ३ । ३ । ७५ । अनुपसर्गस्य ह्वयतेः संप्रसारणमप् च स्याद् भावे । हवः ॥ (सू) हनश्च वधः । ३ । ३ । ७६ । अनुपसर्गाद्धन्तेर्भावे अप् स्यात् वधादेशश्चान्तोदात्तः । बधेन दस्युम् । चाद्घञ् । घातः ॥ (सू) मूर्तौ घनः । ३ । ३ । ७७ । मूर्तिः काठिन्यं तस्मिन्नभिधेये हन्तेरप् स्यात् घनश्चादेशः । अभ्रघनः । कथं सैन्धवघनमानयेति । धर्मशब्देन धर्मी लक्ष्यते ॥ (सू) अन्तर्घनो देशे । ३ । ३ । ७८ । वाहीकग्रामविशेषस्य संज्ञेयम् । अन्तर्घण इति पाठान्तरम् ॥ (सू) अगारैकदेशे प्रघणः प्रघाणश्च । ३ । ३ । ७९ । द्वारदेशे द्वौ प्रकोष्ठावलिन्दौ आभ्यन्तरो बाह्यश्च तत्र बाह्ये प्रकोष्ठे निपातनमिदम् । प्रविशद्भिर्जनैः पादैः प्रकर्षेण हन्यते इति प्रघणः । कर्मण्यप् । पक्षे वृद्धिः ॥ (सू) उद्घनोऽत्याधानम् । ३ । ३ । ८० । अत्याधानमुपरि स्थापनम् । यस्मिन् काष्ठे अन्यानि काष्ठानि स्थापयित्वा तक्ष्यन्ते तदुद्घनः । अधिकरणेऽप् ॥ (सू) अपघनोऽङ्गम् । ३ । ३ । ८१ । अङ्गं शरीरावयवः । स चेह न सर्वः किन्तु पाणिः पादश्चेत्याहुः । करणेऽप् । अपघातोऽन्यः ॥ (सू) करणेऽयोविद्रुषु । ३ । ३ । ८२ । एषु हन्तेः करणेऽप् स्याद्घनादेशश्च । अयो हन्यतेऽनेनेत्ययोघनः । विघनः । द्रुघनः । द्रुघण इत्येके । पूर्वपदात्संज्ञायामिति णत्वम् । संज्ञैषा कुठारस्य । द्रुर्वृक्षः ॥ (सू) स्तम्बे क च । ३ । ३ । ८३ । स्तम्बे उपपदे हन्तेः करणे कः स्यादप् च पक्षे घनादेशश्च । स्तम्बघ्नः । स्तम्बघनः । करण इत्येव । स्तम्बघातः ॥ (सू) परौ घः । ३ । ३ । ८४ । परौ हन्तेरप् स्यात्करणे घशब्दश्चादेशः । परिहन्यतेऽनेनेति परिघः ॥ (सू) परेश्च घाङ्कयोः । ८ । २ । २२ । परे रेफस्य लो वा स्याद्घशब्देऽङ्कशब्दे च । पलिघः । परिघः । पल्यङ्कः । पर्यङ्कः । इह तरप्तमपौ घ इति कृत्रिमस्य न ग्रहणं व्याख्यानात् ॥ (सू) उपघ्न आश्रये । ३ । ३ । ८५ । उपपूर्वाद्धन्तेरप् स्यादुपधालोपश्च । आश्रयशब्देन सामीप्यं लक्ष्यते । पर्वतेनोपहन्यते सामीप्येन गम्यते इति पर्वतोपघ्नः ॥ (सू) सङ्घोद्घौ गणप्रशंसयोः । ३ । ३ । ८६ । संहननं सङ्घः । भावेऽप् । उद्धन्यते उत्कृष्टो ज्ञायते इत्युद्घः । कर्मण्यप् । गत्यर्थानां बुद्ध्यर्थत्वात् हन्तिर्ज्ञाने ॥ (सू) निघो निमितम् । ३ । ३ । ८७ । समन्तान्मितं निमितम् । निर्विशेषं हन्यन्ते ज्ञायन्ते इति निघाः वृक्षाः । समारोहपरिणाहा इत्यर्थः ॥ (सू) ड्वितः क्त्रिः । ३ । ३ । ८८ । अयं भाव एव स्वभावात् । क्त्रेर्मम्नित्यम् । नित्यग्रहणात् क्त्रिर्मब्विषयः । अत एव क्त्र्यन्तेन न विग्रहः । डुपचष् पाके । पाकेन निर्वृत्तं पक्त्रिमम् । डुवप् । उप्त्रिमम् ॥ (सू) ट्वितोऽथुच् । ३ । ३ । ८९ । अयमपि स्वभावाद् भाव एव । टुवेपृ । वेपथुः श्वयथुः ॥ (सू) यजयाचयतविच्छप्रच्छरक्षो नङ् । ३ । ३ । ९० । यज्ञः । याच्ञा । यत्नः । विश्नः । प्रश्नः । प्रश्ने चासन्नेति ज्ञापकान्न संप्रसारणम् । ङित्वं तु विश्न इत्यत्र गुणनिषेधाय । रक्ष्णः ॥ (सू) स्वपो नन् । ३ । ३ । ९१ । स्वप्नः ॥ (सू) उपसर्गे घोः किः । ३ । ३ । ९२ । प्रधिः । अन्तर्धिः । उपाधीयतेऽनेनेत्युपाधिः ॥ (सू) कर्मण्यधिकरणे च । ३ । ३ । ९३ । कर्मण्युपपदे घोः किः स्यादधिकरणेऽर्थे ।

---

संप्रमद इति हर्षे मा भूदिति ॥ प्रजने सर्तेः । प्रजनं प्रजनः । भावे घञ् 'जनिवध्योः—' इति वृद्धिनिषेधः । प्रशब्दवलादत्र जनेरर्थान्तरत्वम् । प्रतिष्ठते इत्यत्र प्रादुर्भावो यथा ॥ तदेतदाह–प्रथमगर्भग्रहणमिति । काशिकानुरोधेनेदमुक्तम् । प्रथमं द्वितीयं वेत्यनाग्रहः, किन्तु गर्भग्रहणमित्यन्ये ॥ हनश्च वधः । अन्तोदात्त इति । सूत्रे वधशब्दोऽन्तोदात्ततयोच्चारित इति भावः ॥ अगारैक–। 'प्रघाणप्रघणालिन्दा बहिर्द्वारप्रकोष्ठके' इत्यमरः ॥ संघोद्घौ–। 'मतल्लिका मचर्चिका प्रकाण्डमुद्घतल्लजौ । प्रशस्तवाचकान्यमूनि' इत्यमरः ॥ ड्वितः–। अयमिति । अत एव पाकेन निर्वृत्तमिति विगृह्यते न तु पक्त्रेनेति । यत्तु प्राचोक्तं भावादाविति तन्नेति भावः ॥ क्त्रेर्मप्–। तद्धितेषु व्याख्यातमिदम् ॥ नित्यग्रहणादिति । तत्र हि नित्यमिति योगो विभज्यते । तत्सामर्थ्यादर्थविशेषानादरेणैव मब्विषयत्वं निर्णीयते, एकयोगत्वे तु निर्वृत्त इत्यधिकारान्निर्वृत्तार्थस्याविवक्षायां स्वातन्त्र्यं प्रसज्येत, ततश्च मपं विनापि पक्त्रिरिति प्रयोगः स्यादिति भावः ॥ उप्त्रिममिति । वपेर्यजादित्वात्किति संप्रसारणे वापेन निर्वृत्तमित्यर्थः ॥ यजयाच–। भावेऽकर्तरि कारके चेति वर्तते । अत एव 'यज्ञेन यज्ञमयजन्त देवाः' इत्यत्र इज्यते यज्ञ इति व्याचक्षते ॥ विश्न इति । 'च्छ्वोः शूडनुनासिके च' इति शः ॥ उपसर्गे–। प्रधिरित्यादि । किन्त्वादातो लोपः ॥ अन्तर्धिरिति । 'अन्तः शब्दस्याङ्किविधि–' इति वार्तिकादुपसर्गत्वम् ॥ उपाधीयतेऽनेनेति । एतेन रूप समीपे [illegible] कर्तरि किरति माधवादिग्रन्थो नादर्तव्य इति ध्वनितम् । 'विधाता विश्वसृड् विधिः' इत्यत्रापि कर्तरि मा भूत् किः, किन्तु 'विध विधाने' इत्यस्मात् 'इगु-

जलानि धीयन्तेऽस्मिन्निति जलधिः ॥ **स्त्रियां क्तिन्** । ३ । ३ । ९४ । स्त्रीलिङ्गे भावादौ क्तिन् स्याद्घञोऽपवादः । अजपौ तु परत्वाद्बाधते । कृतिः । चितिः । स्तुतिः । स्फायी । स्फातिः । स्फीतिकाम इति तु प्रामादिकम् । कान्ता-द्वात्वर्थे णिचि अच इरिति वा समाधेयम् ॥ **श्रुयजीषिस्तुभ्यः करणे** ॥ श्रूयतेऽनया श्रुतिः । यजेरिष्टि इष्टिः । स्तुतिः ॥ **ऋल्वादिभ्यः क्तिन्निष्ठावद्वाच्यः** ॥ तेन नत्वम् । कीर्णिः । गीर्णिः । लूनिः । धूनिः।पूनिः। ह्लाद इति योगविभागात् क्तिनि ह्रस्वः । प्रह्लत्तिः ॥ **ति च** ॥ चूर्तिः । फुल्तिः ॥ **चायतेः क्तिनि चिभावो वाच्यः** ॥ अपचितिः ॥ **सम्पदादिभ्यः क्विप्** ॥ सम्पत् । विपत् ॥ **क्तिन्नपीष्यते** ॥ सम्पत्तिः । विपत्तिः ॥ **स्थागापापचो भावे** ।३।३।९५। क्तिन् स्यादङोऽपवादः । प्रस्थितिः । उपस्थितिः । सङ्गीतिः । सम्पीतिः। पक्तिः । कथमवस्था संस्थेति । व्यवस्थायामिति ज्ञापकात् ॥ **ऊतियूतिजूतिसातिहेतिकीर्तयश्च** । ३ । ३ । ९७ । अवतेर्ज्वरत्वरेत्यूठ् । ऊतिः । स्वरार्थं वचनम् । उदात्त इति हि वर्तते । यूतिः । जूतिः । अनयोर्दीर्घत्वं च निपात्यते । स्यतेः सातिः । द्यतिस्यतिमास्थेतीत्वे प्राप्ते इत्त्वाभावो निपात्यते । सनोतेर्वा जनसनेत्यात्वे कृते स्वरार्थं निपातनम् । हन्तेर्हिनोतेर्वा हेतिः । कीर्तिः ॥ **व्रजयजोर्भावे क्यप्** । ३ । ३ । ९८ । व्रज्या । इज्या ॥ **संज्ञायां समजनिषदनिपतमनविदषुञ्शीङ्भृञिणः** ॥ ३ । ३।९९ । समजादिभ्यः स्त्रियां भावादौ क्यप्स्यात्स चोदात्तः संज्ञायाम् ॥ **अजेः क्यपि वीभावो नेति वाच्यम्** ॥ समजन्त्यस्यामिति समज्या सभा । निषीदन्त्यस्यामिति निषद्या आपणः । निपतन्त्यस्यामिति निपत्या पिच्छिला भूमिः । मन्यतेऽनयेति मन्या गलपार्श्वशिरा । विदन्त्यनया विद्या । सुत्या अभिषवः । शय्या । भृत्या । ईयतेऽनया इत्या शिविका ॥ **कृञः श च** । ३ । ३ । १०० । कृञ इति योगविभागः । कृञः क्यप्स्यात् । कृत्या ॥ **श च** । चात् क्तिन् । क्रिया । कृतिः ॥ **इच्छा** । ३ । ३ । १०१ । इषेर्भावे शो यगभावश्च निपात्यते । इच्छा ॥ **परिचर्यापरिसर्यामृगयाटाट्यानामुपसंख्यानम्** ॥ शो यक् च निपात्यते । परिचर्या पूजा । परिसर्या परिसरणम् । अत्र गुणोऽपि । मृग अन्वेषणे चुरादावदन्तः । अतो लोपाभावोऽपि । शे यकि णिलोपः । मृगया । अटतेः शे यकि टचशब्दस्य द्वित्वं पूर्वभागे यकारनिवृत्तिर्दीर्घश्च ।

---

पधात्कित् ' इतीनि रूपसिद्धेः ॥ **स्त्रियां क्तिन्** । **घञोऽपवाद इति** । यत्तु प्रक्रियाग्रन्थं व्याचक्षाणा आहुः—' भाव्ये तु— ' अधिकः कारोऽधिकारः ' इति घञप्युदाहृतः इति । तद्भ्रमात्, न हि तत्र स्त्रीत्वविशिष्टो भावोऽर्थः, किन्तु पुंस्त्वविशिष्ट इति ध्येयम् ॥ **अजपौ त्विति** । तयोरवकाशः चयः लवः, क्तिनोऽवकाशः कृतिः हृतिः । चिनोतिस्तौतिभ्यां तु स्त्रियामु-भयप्रसङ्गे परत्वात् क्तिन्नित्यर्थः ॥ **प्रामादिकमिति** । ' स्फायः स्फी निष्ठायाम् ' इति निष्ठायामेव स्फीभावविधानादिति भावः ॥ **श्रुयजीति** । परत्वात् ' करणाधिकरणयोश्च ' इति ल्युटि प्राप्ते वचनम् । श्रुतिः श्रोत्रम् ॥ **यजेरिति** । यजेः क्तिनि ' वचिस्वपि—' इति संप्रसारणं ' व्रश्चभ्रस्ज—' इति षत्वे इष्टिरिति रूपम् । इज्यतेऽनयेति विग्रहः । एवमिष्यतेऽनया इष्टिः । स्तूयतेऽनया स्तुतिः ॥ **तेन नत्वमिति** । कीर्णिरित्यादौ ' रदाभ्याम्—' इत्यनेन नत्वम् । लूनिरित्यादौ तु 'ल्वादि-भ्यः ' इत्यनेनेति विवेकः ॥ **ह्लाद इति** । ' ह्लादो निष्ठायाम् ' इत्यत्रेत्यर्थः ॥ **चूर्तिरिति** । ' ति च ' इति चरफलोरुत्त्वे ' र्वोरुपधायाः—' इति दीर्घः ॥ **चायतेः**— । ' चायृ पूजानिशामनयोः ' ॥ **क्तिन्नपीति** । अस्त्रियामिति प्रतिषेधेन स्त्रियां वासरूपविधेरभावादिदमुक्तम् ॥ **अङोऽपवाद इति** । ' पुरस्तादपवादा—' न्यायेन । स्थादिभ्यः ' आतश्चोपसर्गे ' इति, पचेस्तु ' षिद्भिदादिभ्यः—' इति प्राप्तस्याङोऽपवादो, न तु ण्वुलिञोरिति भावः । ण्वुलिञौ तु परत्वाद्भवत एव । ' कां त्वं स्थायिकां कां त्वं स्थायिम् ' इति भाष्यकारप्रयोगात् ॥ **प्रस्थितिरिति** । 'द्यतिस्यतिमास्थाम्—' इत्यात इत्त्वम् ॥ **सङ्गी-तिरिति** । ' घुमास्था–' इत्यादिना ईत्वम् ॥ **उदात्त इतीति** । ' मन्त्रे वृष—' इति सूत्रादनुवर्तते इत्यर्थः । एवं च क्तिन्नन्तस्याद्युदात्तत्वे प्राप्ते ' ऊतियूति–' इत्याद्योऽन्तोदात्ता इति पर्यवसन्नोऽर्थः ॥ **इत्त्वाभाव इति** । 'द्यतिस्यति–'प्राप-स्याभाव इत्यर्थः ॥ **हन्तेरिति** । नकारस्येत्त्वं, हिनोतेस्तु गुण इति बोध्यम् ॥ **कीर्तिरिति** । कीर्तयतेः ' न्यासश्रन्थ–' इति युचि प्राप्ते क्तिन्निपात्यते उदात्तत्वं च । ' तां सुते कीर्तितम् ' **व्रजयजो**— । उदात्त इत्येव । पित्करणं तूत्तरत्र तुग-र्थम् ॥ **गलपार्श्वेति** । तथा हि क्रुद्धो ज्ञायते इति भावः । शेरतेऽस्यामिति शय्या । भरणं भृत्या जीविका । ' कुमारभृत्या-कुशलैरधिष्ठिते ' इति रघुः । संज्ञायां किम्, मतिः । स्मृतिः । आसुतिः । तथा च व्यवहृतम्–' मतिबुद्धिपूजार्थेभ्यश्च ', ' कर्मणि भृतौ ', ' रजः कृष्यासुति–' इत्यादि । एतेन ' मतिबुद्धि–' इत्यादिसूत्रप्रयोगादेव मतिभृतीत्यादीनां साधुत्वमिति दुर्घटायुक्तिः प्रत्युक्ता ॥ **क्रियेति** । यदा भावकर्मणोः शः, तदा ' सार्वधातुके यक् ', रिङ् शयग्लिङ्क्षु ' इति रिङादेशः । अन्यत्र तु यगभावेऽपि शे परतो रिङादेशे कृते इयङि सति रूपं तुल्यम् ॥ **इच्छा** । **इषेर्भाव इति** । न त्वकर्तरि कारके-ऽन्यत्र । अत एव करणेऽर्थे इष्यतेऽनया इष्टिरिति प्रागुक्तम् ॥ **यकारनिवृत्तिरिति** । हलादिशेषस्तु नास्ति, षाष्ठद्वित्वे-ऽपीत्यर्थः ।

---

१ **प्रह्लत्तिरिति**–'निष्ठावत्वं क्तिन्' इत्युक्त्वापि नत्वाघटितप्रयोगो मूलकृतः प्रमादादेवेति केचित् । तदसंगतमेव, 'ऋल्वादिभ्यः' एव क्तिनो निष्ठावत्त्वातिदेशे ह्लादरतोद्भिन्नत्वाभावात्प्रासिमूलकृतः [illegible] अत एव निष्ठावत्त्वा-भावसत्त्वादेव योगविभागेन ह्रस्वः साधितः ॥

अटाट्या ॥ (वा॰) जागर्तेरकारो वा ॥ पक्षे शः । जागरा । जागर्या ॥ (सू॰) अप्रत्ययात् । ३ । ३ । १०२ । प्रत्ययान्तेभ्यो धातुभ्यः स्त्रियामकारप्रत्ययः स्यात् । चिकीर्षा । पुत्रकाम्या ॥ (सू॰) गुरोश्च हलः । ३ । ३ । १०३ । गुरुमतो हलन्तात् स्त्रियामकारः स्यात् । ईहा । ऊहा । गुरोः किम् । भक्तिः । हलः किम् । नीतिः ॥ (वा॰) निष्ठायां सेट इति वक्तव्यम् ॥ नेह । आप्तिः । तितुत्रेति नेट् । दीप्तिः ॥ (वा॰) तितुत्रेष्वग्रहादीनामिति वाच्यम् ॥ निगृहीतिः । निपठितिः ॥ (सू॰) षिद्भिदादिभ्योऽङ् । ३ । ३ । १०४ । षिद्भ्यो भिदादिभ्यश्च स्त्रियामङ् । जॄष् । ऋदृशोऽङि गुणः । जरा । त्रपूष् । त्रपा । भिदा । विदारण एवायम् । भित्तिरन्या । छिदा । मृजा ॥ (ग॰) कृपेः संप्रसारणं च ॥ कृपा ॥ (सू॰) चिन्तिपूजिकथिकुम्बिचर्चश्च । ३ । ३ । १०५ । अङ् स्याद्युचोऽपवादः । चिन्ता । पूजा । कथा । कुम्बा । चर्चा ॥ (सू॰) आतश्चोपसर्गे । ३ । ३ । १०६ । अङ् स्यात् । क्तिनोऽपवादः । प्रदा । उपदा । श्रदन्तरोरुपसर्गवद्वृत्तिः । श्रद्धा । अन्तर्धा । उपसर्गे घोः किरित्यनेन किः । अन्तर्धिः ॥ (सू॰) ण्यासश्रन्थो युच् । ३ । ३ । १०७ । अकारस्यापवादः । कारणा । हारणा । आसना । श्रन्थना ॥ (वा॰) घट्टिवन्दिविदिभ्यश्चेति वाच्यम् ॥ घट्टना । वन्दना । वेदना ॥ (वा॰) इषेरनिच्छार्थस्य ॥ अन्वेषणा ॥ (वा॰) परेर्वा ॥ पर्येषणा । परीष्टिः ॥ (सू॰) रोगाख्यायां ण्वुल्बहुलम् । ३ । ३ । १०८ । प्रच्छर्दिका । प्रवाहिका । विचर्चिका । क्वचिन्न । शिरोर्तिः ॥ (वा॰) धात्वर्थनिर्देशे ण्वुल्वक्तव्यः ॥ आसिका । शायिका ॥ (वा॰) इक्श्तिपौ धातुनिर्देशे ॥ पचिः । पचतिः ॥ (वा॰) वर्णात्कारः ॥ निर्देश इत्येव । अकारः ॥ ककारः ॥

---

धातुद्वित्वे वाभ्याससंज्ञास्वीकारात् । इह च तदुभयाभावादिति भावः ॥ **अटाट्येति** । यदा तु अटतेर्यङन्तात् 'अप्रत्ययात्' इत्युकारस्तदाऽलोपे 'यस्य हलः' इति यलोपेऽटाटेति रूपं बोध्यम् । द्वित्वे हलादिशेषे सति 'दीर्घोऽकितः' इत्यभ्यासस्य दीर्घप्रवृत्तेः ॥ **जागर्तेरिति** । शे परतः 'सार्वधातुके यक्' । 'जाग्रोऽविचिण्–' इति गुणः ॥ **गुरोश्च–** । 'धातोः' इत्यनुवृत्त्या हल इति धातोर्विशेषणात्तदन्तविधौ हलन्तो धातुर्लभ्यते, न चायं गुरुरिति संभवति अज्विषयो हि गुरुः अतो मत्वर्थो लक्ष्यते तदाह **गुरुमत इति** । ननु विपरीतमस्तु 'गुर्वन्ताद्धलः' इति तादृशस्यापि धातोः 'डुक्रीञ्–' इत्यादेः सत्त्वादिति चेत् । मैवम्, 'चेष्टायामनध्वनि', 'आशंसायां भूतवच्च' इति निर्देशेन विपरीतशङ्काया अप्रवृत्तेः ॥ **षिद्भिदा–** । कथं तर्हि 'मधुसुरभिमुखाब्जगन्धलब्धेः' इति माघः, 'प्रेक्षोपलब्धिः' इत्यमरश्च । षित्त्वादङि लभेत्येव ह्युचितम् । सत्यम्, 'अनर्थकास्तु प्रतिवर्णमर्थानुपलब्धेः' इति भाष्यप्रयोगाद्बाहुलकाद्वा क्तिन्नपि बोध्यः । विस्तरस्त्विह मनोरमायां बोध्यः ॥ **भिदेति** । एवमादयोऽदन्ताः समुदाया एव गणे पठ्यन्ते । तत्र ये प्रकृतिभागा 'भिद–छिद' इत्यादयस्ते आदिशब्देन सूत्रे निर्दिष्टाः, गणे विशिष्टपाठस्तु लोकप्रसिद्धार्थविशेषस्य क्वचिदलाक्षणिककार्यस्य संग्रहार्थः ॥ **भित्तिरन्येति** । भिद्यत इति भित्तिः कुड्यम् ॥ **छिदेति** । द्वैधीकरण एवायम् । अन्यत्र तु छित्तिश्छिद्रम् ॥ **मृजेति** । 'मृजू शुद्धौ' अस्याषित्त्वाद्भिदादौ पाठः ॥ **चिन्तिपूजि–** । चकारोऽनुक्तसमुच्चयार्थः । तेन तोलयतेस्तुलेति हरदत्तः । अत एव 'तुलां यदारोहति दन्तवाससा' इति नैषधकृदाह ॥ **युचोऽपवाद इति** । 'ण्यासश्रन्थ–' इति वक्ष्यमाणस्येत्यर्थः ॥ **आसनेति** । आस्यतेऽस्यामिति विग्रहः । 'ऋहलोर्ण्यत्' इति ण्यत्प्रत्यये त्वास्या । न च 'स्त्रीप्रत्यये वासरूपविधिर्न' इति शङ्क्यम्, अपवादस्य युचः स्त्रीप्रकरणस्थत्वेऽपि उत्सर्गस्य ण्यतस्तदभावात् ॥ **घट्टिवन्दि–** । विदिर्लाभार्थो गृह्यते, ज्ञानार्थस्य तु संवित्तिः ॥ **इषेरिति** । अनिच्छार्थस्य युच् । इच्छार्थस्य त्विषेरिच्छेत्येव ॥ **रोगाख्या–** । धातोर्बहुलं ण्वुल् स्यात्प्रत्ययान्तं चेद्रोगस्य संज्ञा । क्तिन्नादीनामपवादः ॥ **प्रच्छर्दिकेति** । 'छर्द वमने' **प्रवाहिकेति** । प्रवाहयति मुहुर्मुहुः प्रवर्तयतीति प्रवाहिका ग्रहणी ॥ **विचर्चिकेति** । 'चर्च अध्ययने' प्रत्ययोपसर्गाभ्यां रोगप्रतीतिः । 'पामपामे विचर्चिका' इत्यमरः ॥ **शिरोऽर्तिरिति** । शिरःपीडा । 'अर्द हिंसायाम्' । 'तितुत्र–' इति नेट् ॥ **धात्वर्थनिर्देश इति** । क्रियानिर्देश इत्यर्थः ॥ **आसिका । शायिकेति** । आसनं शयनमित्यर्थः ॥ **इक्श्तिपौ** । धातोर्निर्देशोऽनुकरणम् । बहुलमित्यनुवृत्तेः क्वचिन्न 'गुप्तिज्किद्भ्यः सन्', 'भुवो वुक् लुङ्लिटोः' ॥ **पचतिरिति** । 'उपसर्गात्सुनोतिसुवतिस्यति–' 'ध्यायतेः संप्रसारणं च' इत्यादिनिर्देशादकर्तृवाचिन्यपि सार्वधातुके परे शबादयः । एवं भावकर्मवाचिन्यपि सार्वधातुके क्वचिद्यक् 'विभाषा लीयतेः' इति यथा । तत्र हि लीलीङोर्यका निर्देशो न तु श्यनेत्युक्तम् । यत्तु प्राचा श्तिपः शित्करणसामर्थ्याच्छबादयः । इत्युक्तम् । तन्न, पिबतिर्ग्लायतिरित्यादौ पिबादेशप्रवृत्त्या आत्त्वनिवृत्त्या च शित्त्वस्य चरितार्थत्वात् **वर्णादिति** । वर्णानुकरणादित्यर्थः । न तु वर्णादुच्चार्यमाणादिति । तथा हि सत्यकार इत्यादावेव स्यान्न तु ककार इत्यादौ,

---

१ भिदा, छिदा, विदा, क्षिपा, गुहा, श्रद्धा, मेधा, गोधा, आरा, हारा, कारा बन्धने, क्षिया, तारा ज्योतिषि, धारा रेखा, चूडा, पीडा, वपा, वसा, मृजा, कृपा, इति भिदादिः ॥ भिदा विदारणे ॥*॥ भित्तिरन्या ॥ छिदा द्वैधीकरणे ॥ छित्तिरन्या ॥ आरा शस्त्र्याम् ॥*॥ आर्तिरन्या । धारा प्रपाते ॥*॥ धृतिरन्या ॥ गुहा गिर्योषध्योः ॥ * ॥ गूढिरन्या ॥

२ 'विद चेतनाख्याननिवासेषु' इति चुरादिना ज्ञानेऽपि वेदनेति सिद्धमिति मनोरमा ॥

रादिफः ॥ रेफः॥ मत्वर्थाच्छः ॥ बहुलवचनादकारलोपः । मत्वर्थीयः ॥ इणजादिभ्यः ॥ आजिः । आतिः ॥ इञ् वपादिभ्यः ॥ वापिः । वासिः । स्वरे भेदः ॥ इक् कृष्यादिभ्यः ॥ कृषिः । गिरिः ॥ संज्ञायाम् । ३ । ३ । १०९ । अत्र धातोर्ण्वुल् । उद्दालकपुष्पभञ्जिका ॥ विभाषाख्यानपरिप्रश्नयोरिञ्च । ३ । ३ । ११० । परिप्रश्ने आख्याने च गम्ये इञ् स्याच्चात् ण्वुल् । विभाषोक्तेर्यथाप्राप्तमन्येऽपि । कां त्वं कारिं कारिकां क्रियां कृत्यां कृतिं वाऽकार्षीः। सर्वां कारिं कारिकां क्रियां कृत्यां कृतिं वाऽकार्षम् । एवं गणिं गणिकां गणनाम् । पाचिं पाचिकां पचां पक्तिम् ॥ पर्यायार्हणोत्पत्तिषु ण्वुच् । ३ । ३ । १११ । पर्यायः परिपाटी क्रमः । अर्हणमर्हः योग्यता । पर्यायादिषु द्योत्येषु ण्वुच् वा स्यात् । भवतः आसिका । शायिका। अग्रगामिका । भवानिक्षुभक्षिकामर्हति । ऋणे-इक्षुभक्षिकां मे धारयति । उत्पत्तौ-इक्षुभक्षिका उदपादि ॥ आक्रोशे नञ्यनिः । ३ । ३ । ११२ । विभाषेति निवृत्तम् । नञि उपपदेऽनिः स्यादाक्रोशे । अजीवनिस्ते शठ भूयात् । अप्रयाणिः ॥ कृत्यल्युटो बहुलम् । ३ । ३ । ११३ । भावेऽकर्तरि च कारके संज्ञायामिति च निवृत्तम् । राज्ञा भुज्यन्ते राजभोजनाः शालयः ॥ नपुंसके भावे क्तः । ३ । ३ । ११४ । ल्युट् च । ३ । ३ । ११५ । हसितम् । हसनम् । योगविभाग उत्तरार्थः ॥ कर्मणि च येन संस्पर्शात्कर्तुः शरीरसुखम् । ३ । ३ । ११६ । येन स्पृश्यमानस्य कर्तुः शरीरसुखमुत्पद्यते तस्मिन् कर्मण्युपपदे ल्युट् स्यात् । पूर्वेण सिद्धे नित्यसमासार्थं वचनम् । पयःपानं सुखम् । कर्तुरिति किम् । गुरोः स्नापनं सुखम् । नेह गुरुः कर्ता किन्तु कर्म ॥ वा यौ । २ । ४ । ५७ । अजेर्वी वा स्याद् यौ । प्रवयणम् । प्राजनम् ॥ करणाधिकरणयोश्च । ३ । ३ । ११ । ल्युट् स्यात् । इध्मप्रव्रश्चनः कुठारः । गोदोहनी स्थाली । खलः प्राक् करणाधिकरणयोरित्यधिकारः ॥ अन्तरदेशे । ८ । ४ । २४ । अन्तःशब्दाद्धन्तेर्नस्य णः स्यात् ।

---

अत्र हि संघातस्योच्चारणात्-अनुकार्ये त्विह वर्णमात्रम् अकारस्योच्चारणार्थत्वात् । कथं तर्हि 'समुच्चयार्थश्चकारः', 'एवकारोऽन्यनिवृत्त्यर्थः' इत्यादिप्रयोगा इति चेत् । अत्राहुः—क्वचित्सङ्घातादपि भवति 'उच्चैस्तरां वा वषट्कारः' इति सूत्रनिर्देशात्, 'सर्वे चकाराः प्रत्याख्यायन्ते' इति भाष्यप्रयोगाद्, बहुलवचनाच्चेति ॥ इह कारप्रत्ययस्य धातोरविहितत्वेपि धात्वधिकारस्थत्वात्कृत्संज्ञा, तेन कृदन्तत्वात्प्रातिपदिकत्वम् । प्रयोजनाभावान्न ककारस्येत्संज्ञा । आर्द्धधातुकत्वाभावादिडागमो न, 'अस्य च्वौ' इत्यादौ तु कारप्रत्ययाभावो बाहुलकादेव ॥ रादिफः । वासरूपविधिना कारोऽपि, तेन 'रकारादीनि नामानि शृण्वतो मम पार्वति' इत्यादिप्रयोगः साधुरेव ॥ अकारलोप इति । अतद्धितपरत्वादभत्वाच्च 'यस्येति—' लोपस्याप्राप्तिरिति भावः । कृदन्तत्वात्प्रातिपदिकत्वमिह पूर्ववद् बोध्यम् । 'तसौ मत्वर्थे' इत्यत्र बाहुलकाच्छो न, 'शैविकान्मतुबर्थीयात्' इत्यत्र तु बाहुलकादेव मतुवर्थशब्दाच्छः । अन्ये तु नैतत्कृदन्तं मत्वर्थे भव इति विगृह्य कुर्वादित्वाच्छप्रत्यये तद्धितान्तमेवेत्याहुः ॥ इणजा— । धात्वर्थनिर्देशे प्राप्तस्य ण्वुलोऽपवादोऽयम् । एवमग्रेपि ॥ आजिरिति । बाहुलकादजेर्वीभावो न ॥ संज्ञायाम् । अधिकरणे ण्वुलर्थोऽयमारम्भः । उद्दालकः श्लेष्मान्तकः तस्य पुष्पाणि भज्यन्ते यस्यां क्रियायां सा, तथा भञ्जनं भञ्जिका भावे ण्वुल् । उद्दालकपुष्पाणां भञ्जिकेत्यन्ये । सूत्रे आख्यानशब्दस्याल्पच्तरत्वेन पूर्वनिपाते व्याख्यानस्य प्रश्नपूर्वकतयाऽर्थप्राप्तक्रममनुसृत्य व्याचष्टे—परिप्रश्ने आख्याने चेति ॥ परिपाटीति । 'पट गतौ' परिपूर्वः । 'इणजादिभ्यः' इतीण् 'कृदिकारात्' इति ङीष् ॥ आक्रोशे— । आक्रोशः शापः ॥ नपुंसके भावे क्तः । ननु 'तयोरेव कृत्यक्तखलर्थाः' इति लिङ्गत्रयसाधारण्येन भावकर्मणोः कृत्यादिविधानात्तेनैव नपुंसके भावे क्तः सिध्यति किमनेन पुनर्विधानेनेति चेत् । अत्राहुः—'भूते' इत्यधिकृत्य 'निष्ठा' इति सूत्रेण विहितस्य क्तस्य भावोऽर्थः'तयोरेव—' इति सूत्रेण विहितः,अनेन तु कालसामान्ये नपुंसके भावे क्तो विधीयते, एवं च स्वविषये परत्वात् घञजपां बाधक इति परिशेषादेतेषां पुंविषयत्वं सिध्यति । किञ्च, इह 'भावे चाकर्मकेभ्यः' इत्यस्यासंनिधानात्सकर्मकेभ्योऽप्ययं भवति । घञादिवत् । 'गतं तिरश्चीनमनूरुसारथेः' इत्यादिदर्शनात् । तथा च नास्त्यत्र शङ्केति । नन्वेवं तद्योगे कर्मणि द्वितीया स्यात् । क्तयोगलक्षणषष्ठ्या 'न लोका—' इति निषेधात् । एवं च घटं कृतं वृक्षं भिन्नमित्यादि प्रसज्येत, 'अनूरुसारथेः' इत्यत्र तु कर्तरि तृतीया नापाद्यते, कारकषष्ठ्या निषेधेऽपि शेषत्वविवक्षया षष्ठीति समाधानसम्भवादिति चेत् । मैवम्, नपुंसके भावे क्तस्य योगे षष्ठ्या उपसंख्यातत्वात्कर्मणि द्वितीयाया अभावात् । शेषत्वविवक्षामाश्रित्य वार्तिकमिदं प्रत्याख्यातमाकरे इति चेत् । तर्हि तदप्रामाण्यात्प्रायेण शेषत्वविवक्षैवेत्यस्तु । तथा च घटं कृतमित्यादि तु न प्रसज्यते एव । क्वचित्तु द्वितीयापि दृश्यते 'भ्रान्तं देशमनेकदुर्गविषमम्' इति दिक् ॥ कर्मणि च— । 'कर्तुः' इति कर्मणि षष्ठी 'उभयप्राप्तौ कर्मणि' इति नियमात् येनेति तृतीया, तदाह—येन स्पृश्यमानस्य कर्तुरिति । ल्युट् स्यादिति । 'नपुंसके भावे' इति बोध्यम् । अत एवाह—पूर्वेणेति । 'ल्युट् च' इत्यनेनेत्यर्थः ॥ नेहेति । स्नानकर्तृत्वेऽपि स्नापने न गुरुः कर्ता, किन्तु शिष्य इत्यर्थः । शरीरग्रहणं किं, पुत्रस्य परिष्वञ्जनं सुखम् । मानसी प्रीतिरत्र ॥ करणाधिकरणयोश्च— । येन नाप्राप्ति— न्यायेन घञो बाधोऽयम् अजपौ स्त्रीप्रत्ययांश्च परत्वाद् बाधते । उक्तं हि—'अजब्भ्यां स्त्रीखलनाः, स्त्रियाः खलनौ विप्रतिषेधेन' इति । इध्मेति । इध्मानि प्रव्रश्च्यन्ते येन, गावो दुह्यते यस्यामिति

अन्तर्हणनम् । देशे तु अन्तर्हननो देशः । अत्पूर्वस्येत्येव । अन्तर्घ्नन्ति । तपरः किम् । अन्तरघानि ॥ (सू) अयनं च । ८ । ४ । २५ । अयनस्य णोऽन्तशब्दात्परस्य । अन्तरयणम् । अदेश इत्येव । अन्तरयनो देशः ॥ (सू) पुंसि संज्ञायां घः प्रायेण । ३ । ३ । ११८ । छादेर्घेऽद्व्युपसर्गस्य ।६।४।९६। द्विप्रभृत्युपसर्गहीनस्य छादेर्ह्रस्वः स्याद्घे परे । दन्ताश्छाद्यन्तेऽनेन दन्तच्छदः । प्रच्छदः । अद्व्रीति किम् । समुपच्छादः । आकुर्वन्त्यस्मिन् आकरः[1] ॥ (सू) गोचरसंचरवहव्रजव्यजापणनिगमाश्च ।३।३।११९। घान्ता निपात्यन्ते । हलश्चेति वक्ष्यमाणस्य घञोऽपवादः । गावश्चरन्त्यस्मिन्निति गोचरो देशः । संचरन्तेऽनेन संचरो मार्गः । वहन्त्यनेन वहः स्कन्धः । व्रजः । व्यजस्तालवृन्तम् । निपातनाद्वीभावो न । आपणः पण्यस्थानम् । निगच्छन्त्यनेन निगमश्छन्दः । चात्कषः। निकषः ॥ (सू) अवे तॄस्त्रोर्घञ् । ३ । ३ । १२० । अवतारः कूपादेः । अवस्तारो जवनिका ॥ (सू) हलश्च । ३ । ३ । १२१ । हलन्ताद्घञ् स्यात् । घापवादः । रमन्ते योगिनोऽस्मिन्निति रामः । अपमृज्यतेऽनेन व्याध्यादिरित्यपामार्गः । विमार्गः समूहनी ॥ (सू) अध्यायन्यायोद्यावसंहाराश्च । ३ । ३ । १२२ । अधीयतेऽस्मिन् अध्यायः । नियन्ति उद्यवन्ति संहरन्त्यनेनेति विग्रहः ॥ (वा) अवहाराधारावायानामुपसंख्यानम् ॥ (सू) उदङ्कोऽनुदके[2] । ३ । ३ । १२३ । उत्पूर्वादञ्चतेर्घञ् स्यात् न तूदके । घृतमुदच्यते उद्ध्रियतेऽस्मिन्निति घृतोदङ्कश्चर्ममयं भाण्डम् । अनुदके किम् । उदकोदञ्चनः ॥ (सू) जालमानायः । ३ । ३ । १२४ । आनीयन्ते मत्स्यादयोऽनेनेत्यानायः । जालमिति किम् । आनयनः ॥ (सू) खनो घ च । ३ । ३ । १२५ । चाद्घञ् । आखनः । आखानः । घित्करणमन्यतोऽप्ययमिति ज्ञापनार्थम्[3] । तेन भगः पदमित्यादि ॥ (वा) खनेर्डडरेकेकवका वाच्याः ॥ आखः । आखरः । आखनिकः । आखनिकवकः । एते खनित्रवचनाः ॥ (सू) ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल् । ३ । ३ । १२६ । करणाधिकरणयोरिति निवृत्तम्[4] । एषु दुःखसुखार्थेषूपपदेषु खल् स्यात् । तयोरेवेति भावे कर्मणि च । कृच्छ्रे—दुष्करः कटो भवता । अकृच्छ्रे—ईषत्करः । सुकरः ॥ (वा) निमिमीलियां खलचोरात्त्वं नेति वाच्यम् ॥ ईषन्निमयः । दुष्प्रमयः । सुविलयः । निमयः । मयः । लयः ॥ (सू) उपसर्गात् खल्घञोः । ७ । १ । ६७ ।

---

विग्रहः ॥ आकुर्वन्तीति । एत्य कुर्वन्त्यस्मिन्व्यवहारमित्याकरः उत्पत्तिस्थानम् ॥ अवे— । अवे उपपदे तॄस्तॄभ्यां करणाधिकरणयोः पुंसि संज्ञायां घञ् स्यात्, घस्यापवादः ॥ अवहारेत्यादि । वृत्तिकारस्त्वाधारावायशब्दौ सूत्रे प्रक्षिप्य चकारेणावहारशब्दं संजग्राह, तदसंबद्धमिति स्पष्टमेव ॥ उदङ्को— । 'हलश्च' इत्येव सिद्धे उदकप्रतिषेधार्थमिदम् ॥ उदकोदञ्चन इति । 'पुंसि संज्ञायाम्—' इति घे प्राप्ते घञ्विहितः । उदके तु घञि प्रतिषिद्धे घ एव स्यान्न तु ल्युडिति चेत् । मैवम्, प्रतिषेधसामर्थ्यात् घस्याप्यप्रवृत्तेः । न हि इह घे घञि वा रूपे विशेषोऽस्ति । न च स्वरे विशेषः, घे सति कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तता, घञ्यपि 'थाथादि—' स्वरेण तथैवेति ॥ जालमा— । 'जल धान्ये' 'ज्वलितिकसन्तेभ्यो णः' इति णप्रत्यये जालशब्दः सिद्धः । तेन जालशब्दोऽत्र निपात्यत इति न भ्रमितव्यम् ॥ खनो— । घित्करणमिति । आखन इत्यादौ 'चजोः—' इति कुत्वस्य प्रसक्त्यभावादिति भावः ॥ भगः पदमिति । ननु पदमित्यत्र घस्य किं प्रयोजनमिति चेत् । अत्राहुः—करणाधिकरणयोः 'पुंसि संज्ञायाम्—' इति यदि घः स्यात्तदा पदमिति नपुंसकं न स्यात्, अनेन चेत् घो भवति तदा त्विष्टसिद्धिरिति ॥ एते इति । आखनादयः षडित्यर्थः ॥ ईषद्दुःसुषु— । इह सामान्योक्तावपि योग्यताबलाद्विशेषणस्य विषयविभागो लभ्यते—दुरिति कृच्छ्रार्थे, इतरौ त्वकृच्छ्रार्थे, तदेतद्दर्शयति—कृच्छ्रेऽदुष्कर इत्यादिना ॥ भवतेति । 'न लोका—' इति षष्ठीनिषेधात्कर्तरि तृतीया । कृच्छ्रेत्यादि किम्, ईषत्कार्ये, स्वल्पं कार्यमित्यर्थः। खलिति लकारः स्वरार्थः। खित्करणं तूत्तरत्र मुमर्थम्[5] ॥ निमिमीति । 'मीनातिमिनोतिदीङां ल्यपि च', 'विभाषा लीयतेः' इति प्राप्तं निषिध्यते ॥ निमय इत्यादि । 'एरच्' ॥ उपसर्गात्खल्घञोः । 'लभेश्च' इत्यनेनैव सिद्धे नियमार्थमिदं

---

१ आकर इति—'खनिः स्त्रियामाकरः स्यात्' इत्यमरः ॥ २ उदङ्क इति—अधिकरणे घञन्तोऽयं निपातितो ल्युटं बाधितुमनुदके इति च बोधयितुम् । यदि तु 'हलश्च' इति सूत्रे प्रायेणेत्यस्य सम्बन्धादेवेष्टसिद्धिरित्युच्यते, तदेदं नारम्भणीयम् । तदुक्तं भाष्ये—'उदङ्कोऽनुदकग्रहणमनर्थकम्— । घञ् कस्मान्न भवति—प्रायवचनात्—' इति ॥ ३ नन्वस्य घित्त्वं व्यर्थम्, न हि खन—धातोः 'चजोः' इत्येतत्प्रवृत्तियोग्यः कश्चन वर्णोऽस्तीत्यत आह—घित्करणमिति ॥ ४ न स्यादिति—'घञजपः पुंसि' इत्युक्तेरिति भावः । ननु घञोऽभावे कथमस्य प्रवृत्तिरिति चेन्न, पुंसीति विहित—घप्रत्ययस्य घञोऽपवादत्वेन तत्स्थानापन्नत्वात् 'लभते' इति व्याप्त्यैव प्रवृत्तेरङ्गीकारात् ॥ ५ नन्वीषदादीनामव्ययत्वात् खलः खित्त्वस्य न फलमत आह खित्करणं तूत्तरत्रेति ॥

उपसर्गादेव लभेर्नुम् स्यात्। ईषत्प्रलम्भः। दुष्प्रलम्भः। सुप्रलम्भः। उपालम्भः। उपसर्गात्किम्। ईषल्लभः। लाभः॥ (सू) न सुदुर्भ्यां केवलाभ्याम्। ७। १। ६८। उपसर्गान्तररहिताभ्यां सुदुर्भ्यां लभेर्नुम्न स्यात् खल्घञोः। सुलभम्। दुर्लभम्। केवलाभ्यां किम्। सुप्रलम्भः। अतिदुर्लम्भः। कथं तर्हि अतिसुलभमतिदुर्लभमिति। यदा स्वती कर्मप्रवचनीयौ तदा भविष्यति॥ (सू) कर्तृकर्मणोश्च भूकृञोः। ३। ३। १२७। कर्तृकर्मणोरीषदादिषु च उपपदेषु भूकृञोः खल् स्यात्। यथासंख्यं नेष्यते। कर्तृकर्मणी च धातोरव्यवधानेन प्रयोज्ये ईषदादयस्तु ततः प्राक्॥ (वा) कर्तृकर्मणोश्च्व्यर्थयोरिति वाच्यम्॥ खित्त्वान्मुम्। अनाढ्येनाढ्येन दुःखेन भूयते दुराढ्यम्भवम्। ईषदाढ्यम्भवम्। स्वाढ्यम्भवम्। ईषदाढ्यङ्करः। दुराढ्यङ्करः। स्वाढ्यङ्करः। च्व्यर्थयोः किम्। आढ्येन सुभूयते॥ (सू) आतो युच्। ३। ३। १२८। खलोऽपवादः। ईषत्पानः सोमो भवता। दुष्पानः। सुपानः॥ (वा) भाषायां शासियुधिदृशिधृषिमृषिभ्यो युज्वाच्यः॥ दुःशासनः। दुर्योधन इत्यादि॥ (सू) षात्पदान्तात्। ८। ४। ३५। नस्य णो न। निष्पानम्। सर्पिष्पानम्। षात्किम्। निर्णयः। पदान्तात्किम्। पुष्णाति। पदे अन्तः पदान्त इति सप्तमीसमासोऽयम्। तेनेह न। सुसर्पिष्केण॥ (सू) आवश्यकाधमर्ण्ययोर्णिनिः। ३। ३। १७०। अवश्यङ्कारी। शतन्दायी॥ (सू) कृत्याश्च। ३। ३। १७१। आवश्यकाधमर्ण्ययोरित्येव। अवश्यं हरिः सेव्यः। शतं देयम्॥ (सू) क्तिच्क्तौ च संज्ञायाम्। ३। ३। १७४। धातोः क्तिच् क्तश्च स्यादाशिषि संज्ञायाम्। तितुत्रेति नेट्। भवतात् भूतिः॥ (सू) न क्तिचि दीर्घश्च। ६। ४। ३९। अनिटां वनतितनोत्यादीनां च दीर्घानुनासिकलोपौ न स्तः क्तिचि परे। यन्तिः। रन्तिः। वन्तिः। तन्तिः॥ (सू) सनः क्तिचि लोपश्चास्याऽन्यतरस्याम्। ६। ४। ४५। सनोतेः क्तिचि आत्वं वा स्याल्लोपश्च वा। सनुतात्। सातिः। सतिः। सन्तिः। देवा एनं देयासुर्देवदत्तः॥ (सू) अलंखल्वोः प्रतिषेधयोः प्राचां क्त्वा। ३। ४। १८। प्रतिषेधार्थयोरलङ्खल्वोरुपपदयोः क्त्वा स्यात्। प्राचां ग्रहणं पूजार्थम्। अमैवाव्ययेनेति नियमान्नोपपदसमासः। दो दद्घोः। अलं दत्त्वा। घुमास्था। पीत्वा खलु। अलंखल्वोः किम्। मा कार्षीत्। प्रतिषेधयोः किम्। अलङ्कारः॥

---

मित्याह—उपसर्गादेवेति॥ यदा स्वती इति—। 'सुः पूजायाम्', 'अतिरतिक्रमणे च' इति तयोः कर्मप्रवचनीयत्वम्। कर्तृकर्मणोः—। चकारः सन्नियोगार्थः। यदा कर्तृकर्मणोरीषदादीनां च युगपत्प्रयोगस्तदैव प्रत्ययो यथा स्यात्। न च कर्तृकर्मणोः प्रत्ययार्थत्वमेवास्तु, न तूपपदत्वमिति वाच्यम्, ईषदादीनामेवोपपदत्वे तु खलः खित्त्वस्य वैयर्थ्यापत्तेः। मुमर्थं हि तत्, मुम् चानव्ययस्य विधीयते, तस्मात्कर्तृकर्मणोरिति उपपदत्वमेव तदेतदाह—ईषदादिषु चेति। कर्तृकर्मणी द्वे, भूकृञौ च द्वौ, तयोर्यथासंख्यं प्राप्तम्। स्वीकृतं च काशिकाकृता, न्यासकारहरदत्तादिभिश्च, प्राचापि तथैवोक्तं, तद्व्याख्यातृभिश्चानुमोदितम्। तत्सर्वं नादर्तव्यम्, यथासंख्यसूत्रस्थभाष्यविरोधादिति ध्वनयन्नाह—यथासंख्यं नेष्यत इति। ननूपपदयोर्मध्ये पूर्वापरीभावव्यवस्था न सिध्यति। भूकृञोरव्यवहितत्वं कर्तृकर्मणोरेवेष्यते, न त्वीषदादीनाम्। एवं च कथमत्रेष्टव्यवस्था सिध्यतीति चेत्। अत्राहुः—बहुलग्रहणानुवृत्त्या दुराढ्यंभव इति भाष्योदाहरणाच्चेष्टव्यवस्था सिध्यतीति तदेतदभिप्रेत्याह—कर्तृकर्मणी चेति॥ भवतेः कर्तर्युदाहरति—अनाढ्येनाढ्येनेति॥ कर्मणि त्वनाढ्य आढ्यो भूयते इति विग्रहः। भाव्यते इति तदर्थः। एवमग्रेऽपि विग्रहद्वयमुन्नेयम्। अनाढ्येनाढ्येन स्वयमेव क्रियते अनाढ्यः आढ्यः क्रियत इति॥ इत्यादीति। आदिशब्देन दुर्दर्शनः, दुर्धर्षणः, दुर्मर्षणः॥ क्तिच्क्तौ—। क्तिचश्चकारो 'न क्तिचि' इति विशेषणार्थः। 'न क्तौ' इत्युक्ते हि क्तिनोऽपि ग्रहणं स्यादिति प्राञ्चः। तन्न, 'एकानुबन्ध' परिभाषयैव क्तिनो व्यावृत्तिसिद्धेरिति हरदत्तः। यत्तु वदन्ति—'तितुत्र—' इत्यत्र सामान्यग्रहणार्थश्चकारः। अन्यथा एकानुबन्धत्वादस्यैव ग्रहणं स्यान्न तु क्तिन इति तदसत्, 'तितुत्र' इति सूत्रेऽनुबन्धविशिष्टरूपानुच्चारणेनैकानुबन्धपरिभाषाया उक्तिसम्भवस्यैवाभावात्। एतेन 'तितुत्र—' इति सूत्रे एकानुबन्धत्वात्क्तिचेव गृह्यते, न त्वयं क्तिन्, ततश्च रोदितीति रूपं न स्यादिति शङ्काप्यपास्ता॥ भूतिरिति। यद्यपीह परत्वात् 'श्र्युकः क्किति' इत्येवेण्निषेधो न्याय्यः तथापि वन्तितन्त्योरिण्निषेधार्थमावश्यकत्वात्फले विशेषाभावाच्च 'तितुत्र—' इत्युपन्यस्तम्॥ दीर्घानुनासिकेति। 'अनुनासिकस्य क्विझलोः' इति दीर्घस्य, 'अनुदात्तोपदेश—' इत्यादिनानुनासिकलोपस्य च प्राप्तिरिति बोध्यम्॥ यन्तिरित्यादि। 'यम उपरमे', 'रमु क्रीडायाम्', 'वनु याचने', 'तनु विस्तारे'॥ अलंखल्वोः। पूजार्थमिति। ननु विकल्पार्थमेवास्तु, अलं रुदित्वा, अलंरोदनेनेति रूपद्वयसिद्ध्यर्थमिति चेत्। मैवम्, वासरूपन्यायेनैतत्सिद्धेः। न च 'क्तल्युट्तुमुन्खलर्थेषु वासरूपविधिर्न' इति सिद्धान्तात् ल्युटि वासरूपन्यायो नास्तीति वाच्यम्। क्तल्युडादयोऽपवादभूताः स्ववाध्यं नित्यं बाधन्ते इति हि तस्य निष्कृष्टोऽर्थः। इह तु ल्युटोऽपवादः क्त्वेति वैषम्यात्॥ ननु प्रैषादिषु 'कृत्याश्च' इति वचनेन क्त्र्यधिकारादूर्ध्वं वासरूपविधिर्नावश्यमस्तीति ज्ञापितमिति चेत्। किं ततः, 'ज्ञापकसिद्धं न सर्वत्र' इतीष्टानुरोधेन तदभ्युपगमे बाधकाभावात्॥ अलं दत्त्वेति। अपात्रे न देयमिति फलितम्॥

---

१ यदा स्वती कर्मप्रवचनीयाविति—अतः कर्मप्रवचनीयत्वे उपसर्गान्तररहितत्वमस्त्येव, कर्मप्रवचनीयसंज्ञाया उपसर्गसंज्ञाबाधकत्वात्। सोः कर्मप्रवचनीयत्वे तु उपसर्गात्परत्वमेव नास्तीत्यभिप्रायेणोभयोरुपादानम्॥

**उदीचां माङो व्यतीहारे । ३ । ४ । १९ ।** व्यतीहारेऽर्थे माङः क्त्वा स्यात् । अपूर्वकालार्थमिदम् ॥ **मयतेरिदन्यतरस्याम् । ६ । ४ । ७० ।** मेङ इकारोऽन्तादेशः स्याद्वा ल्यपि । अपमित्य याचते । अपमाय । उदीचांग्रहणाद्यथाप्राप्तमपि । याचित्वा अपमयते ॥ **परावरयोगे च । ३ । ४ । २० ।** परेण पूर्वस्यावरेण परस्य योगे गम्ये धातोः क्त्वा स्यात् । अप्राप्य नदीं पर्वतः । परनदीयोगोऽत्र पर्वतस्य । अतिक्रम्य पर्वतं स्थिता नदी । अवरपर्वतयोगोऽत्र नद्याः ॥ **समानकर्तृकयोः पूर्वकाले । ३ । ४ । २१ ।** समानकर्तृकयोर्धात्वर्थयोः पूर्वकाले विद्यमानाद्धातोः क्त्वा स्यात् । क्त्वा तु–अव्ययकृतो भावे । भुक्त्वा व्रजति । द्वित्वमतन्त्रम् । स्नात्वा भुक्त्वा पीत्वा व्रजति । अनुदात्तेत्यनुनासिकलोपः । विष्णुं नत्वा स्तौति ॥ **स्वरत्यादेः श्र्युकः क्रितीति नित्यमिड्भावः** पूर्वविप्रतिषेधेन ॥ स्वृत्वा । सूत्वा । धूत्वा ॥ **क्त्वि स्कन्दिस्यन्दोः । ६ । ४ । ३१ ।** एतयोर्नलोपो न स्यात् क्त्वि परे । स्कन्त्वा । ऊदित्त्वादिड्वा । स्यन्त्वा । स्यन्दित्वा ॥ **न क्त्वा सेट् । १ । २ । १८ ।** सेट् क्त्वा किन्न स्यात् । शयित्वा । सेट् किम् । कृत्वा ॥ **मृडमृदगुधकुषक्लिशवदवसः क्त्वा । १ । २ । ७ ।** एभ्यः सेट् क्त्वा कित् । मृडित्वा क्लिशः क्त्वेति वेट् । क्लिशित्वा । क्लिष्ट्वा । उदित्वा । उषित्वा । रुदविदेति कित्त्वम् । रुदित्वा । विदित्वा । मुषित्वा । गृहीत्वा ॥ **नोपधात्थफान्ताद्वा । १ । २ । २३ ।** सेट् क्त्वा कित्स्याद्वा । श्रथित्वा । श्रन्थित्वा । गुफित्वा । गुंफित्वा । नोपधात्किम् । कोथित्वा । रेफित्वा ॥ **वञ्चिलुञ्च्यृतश्च । १ । २ ।**

---

तोऽर्थः ॥ **उदीचाम् ।** व्यतीहारो व्यतिक्रमः । मेङः कृतात्त्वस्य माङ इति निर्देशो 'नानुबन्धकृतमनेजन्तत्वम्' इति परिभाषां ज्ञापयति, तेन घुसंज्ञायां दैपोऽपि 'अदाप्' इति पर्युदासः सिध्यति ॥ **अपमित्येति ।** 'समासेऽनञ्पूर्वे' इति वक्ष्यमाणेन क्त्वो ल्यपि तुक् । याचित्वा प्रणिददातीत्यर्थः ॥ **परावर– । अप्राप्येति ।** दक्षिणदेशस्थानां गङ्गामप्राप्य विन्ध्यः । गङ्गाप्राप्तिविरहविशिष्टदेशस्थो विन्ध्य इत्यर्थः । अत्र विन्ध्यात्परा गङ्गेति गम्यते ॥ **अतिक्रम्येति ।** दक्षिणदेशस्थानामेवायमपि प्रयोगः । अत्र हि गङ्गायाः पूर्वो विन्ध्य इति गम्यते । इह त्रिसूत्र्यां क्त्वाप्रत्ययस्य भावमात्रार्थत्वेऽपि विशेषणविशेष्यसंसर्गो भिद्यन्त इति नास्ति वैयर्थ्यमिति दिक् ॥ **समानक– ।** इह धात्वधिकारेऽपि समानकर्तृत्वं क्रिययोरेव संभवतीत्याशयेनाह–**धात्वर्थयोरिति ।** निर्धारणे षष्ठी, सप्तमी वा । धात्वर्थयोर्मध्ये पूर्वकालो यस्य धात्वर्थस्य तस्मिन्विद्यमानादित्यर्थः । एवं च निर्धारणे विभक्तिरेव पूर्वकाले इत्यस्य बहुव्रीहित्वद्योतिकेति फलितम् ॥ **क्त्वा स्यादिति ।** स च भावे 'अव्ययकृतः–' इति वचनात् । भावोऽपि घञादाविव नेह सिद्धावस्थः किन्तु साध्यावस्थः, स च धातुनैव लब्धः । क्त्वाप्रकृत्यर्थभूता क्रिया च क्रियान्तरं प्रति विशेषणं, धातुसम्बन्धाधिकारात् । संसर्गश्चेह सामानाधिकरण्यं पूर्वोत्तरकालत्वं च, तत्र संसर्गविशेषतात्पर्यग्राहकाः क्त्वाणमुलादयः । अत्र च 'समानकर्तृकयोः' इति सूत्रांशेन सामानाधिकरण्यमुपनिबद्धम्, धातूपात्तव्यापाराश्रयस्य कर्तृतया तथा पर्यवसानादिति दिक् ॥ **द्वित्वमिति ।** नन्वमीषां ब्राह्मणानां पूर्वमानयेत्युक्ते मध्यमो नानीयते, तथेहापि बहुक्रियासमभिव्याहारे मध्यमक्रियावाचकात् क्त्वाप्रत्ययो न स्यादिति चेत् । अत्राहुः–इहाप्याख्यातवाच्या क्रिया प्रधानं तां प्रति क्त्वान्तोपस्थिताः क्रियाः सर्वा एव विशेषणं, न तु तासां परस्परसम्बन्धः 'गुणानां च परार्थत्वात्' इति न्यायात् । अत एव स्नात्वा पीत्वा भुक्त्वा व्रजतीत्यानियमेन प्रयुज्यते इति ॥ 'स्वरतिसूति–' इत्यादिना विकल्पे प्राप्ते नित्यार्थमाह–**स्वरत्यादेरिति ॥ क्त्वि स्कन्दि– ।** 'स्कन्दिर्गतिशोषणयोः' । 'इर इत्संज्ञा–' इति वार्तिकादिकारमात्रस्येत्संज्ञा नेति 'अनिदिताम्–' इति पर्युदासोऽत्र न प्रवर्तत इति स्कन्दिग्रहणम् ॥ **स्कन्त्वेति ।** 'एकाचः–' इति नेट् ॥ **मृडमृद– ।** 'मृड सुखने', 'मृद क्षोदे', 'गुध परिवेष्टने', 'गुध रोषे च', 'कुष निष्कर्षे', 'क्लिश हिंसायाम्' दिवादिः, 'क्लिश विबाधने' क्र्यादिः, 'वद व्यक्तायां वाचि', 'वस निवासे' ॥ **किदिति ।** 'असंयोगाल्लिट् कित्' इत्यतः किदित्यनुवर्तते इति भावः ॥ **उदित्वेति ।** यजादित्वात्संप्रसारणम् ॥ **उषित्वेति ।** 'वसतिक्षुधोः–' इतीट् । यजादित्वात्संप्रसारणम् । 'शासिवसि–' इति षः ॥ **गृहीत्वेति ।** 'ग्रहिज्या–' इति संप्रसारणम् । 'ग्रहोऽलिटि' इति इटो दीर्घः ॥ **नोपधात्थ– ।** अन्तग्रहणं स्पष्टार्थम् । थफादित्युक्तेऽपि धातोरेव क्त्वाप्रत्ययविधानाद्विशेष्यसंनिधानेन तदन्तविधिना थफान्तादिति लाभात् ॥ **कोथित्वा । रेफित्वेति ।** 'कुथ पूतीभावे' 'रिफ कत्थनयुद्धनिन्दाहिंसादानेषु' इह

---

१ सूत्रे 'समानकर्तृकयोः' इति द्विवचननिर्देशाद् द्वित्वं विवक्षितमिति भ्रमवारणायाह–**द्वित्वमतन्त्रमिति ।** एवं चान्यलब्धस्याप्यर्थस्य स्पष्टप्रतिपत्त्यर्थं द्विवचननिर्देशो न तु विवक्षितत्वादेव, पूर्वकालविशिष्टा क्रिया च समानकर्तृकत्वसम्बन्धेन प्रधानक्रियायां विशेषणम् ॥ २ यद्यपीह 'सेट्' इति न प्रकृतं, तथाप्यस्य सूत्रस्य न क्त्वा सेट् इति सूत्रप्राप्तकित्त्वप्रतिषेधबाधकतया सेड्विषयकमेवेदमित्याशयेनाह–सेट् क्त्वेति ॥

२४ । सेट् क्त्वा किद्वा । वचित्वा । वञ्चित्वा । लुचित्वा । लुञ्चित्वा । ऋतित्वा । अर्तित्वा ॥ **तृषिमृषिकृशेः काश्यपस्य । १ । २ । २५ ।** एभ्यः सेट् क्त्वा किद्वा । तृषित्वा । तर्षित्वा । मृषित्वा । मर्षित्वा । कृशित्वा । कर्शित्वा । रलो व्युपधादिति वा कित्त्वम् । द्युतित्वा । द्योतित्वा । लिखित्वा । लेखित्वा । रलः किम् । सेवित्वा । व्युपधात्किम् । वर्तित्वा । हलादेः किम् । एषित्वा । सेट् किम् । भुक्त्वा । वसतिक्षुधोरिट् । उषित्वा । क्षुधित्वा । क्षोधित्वा । अञ्चेः[1] पूजायामिति नित्यमिट् । अञ्चित्वा । गतौ तु । अक्त्वेत्यपि । लुभित्वा । लोभित्वा । लुभोऽविमोहन इतीट् । विमोहने तु लुब्ध्वा ॥ **जॄव्रश्च्योः क्त्वि । ७ । २ । ५५ ।** आभ्यां परस्य क्त्व इट् स्यात् । जरीत्वा । जरित्वा । व्रश्चित्वा ॥ **उदितो वा । ७ । २ । ५६ ।** उदितः परस्य क्त्वा इड्वा शमित्वा । अनुनासिकस्य क्वीति दीर्घः । शान्त्वा । द्यूत्वा । देवित्वा ॥ **क्रमश्च क्त्वि । ६ । ४ । १८ ।** क्रम उपधाया वा दीर्घः स्यात् झलादौ क्त्वि परे । क्रान्त्वा । क्रन्त्वा । झलि किम् । क्रमित्वा । पूङश्चेति वेट् । पवित्वा । पूत्वा ॥ **जान्तनशां विभाषा । ६ । ४ । ३२ ।** जान्तानां नशेश्च नलोपो वा स्यात् क्त्वि परे । भक्त्वा । भङ्क्त्वा । रक्त्वा । रङ्क्त्वा । मस्जिनशोरिति नुम् । तस्य पक्षे लोपः । नष्ट्वा । नंष्ट्वा । रधादिभ्यश्चेतीट्पक्षे । नशित्वा ॥ **झलादाविति वाच्यम् ॥** नेह । अञ्जित्वा । ऊदित्त्वाद्वेट् । पक्षे । अक्त्वा । अङ्क्त्वा । जनसनेत्यात्त्वम् । खात्वा । खनित्वा । द्यतिस्यतीतीत्त्वम् । दित्वा । सित्वा । मित्वा । स्थित्वा । दधातेर्हिः । हित्वा ॥ **जहातेश्च क्त्वि । ७ । ४ । ४३ ।** हित्वा । हाङस्तु । हात्वा । अदो जग्धिः । जग्ध्वा ॥ **समासेऽनञ्पूर्वे क्त्वो ल्यप् । ७ । १ । ३७ ।** अव्ययपूर्वपदे[2]ऽनञ्समासे क्त्वो ल्यबादेशः स्यात् । तुक् । प्रकृत्य । अनञ् किम् । अकृत्वा । पर्युदासाश्रयणान्नेह । परमकृत्वा ॥ **षत्वतुकोरसिद्धः । ६ । १ । ८६ ।** षत्वे तुकि च कर्तव्ये एकादेशशास्त्रमसिद्धं स्यात् । कोऽसिचत् । इह षत्वं न ।

---

'रलो व्युपधात्—' इति विकल्पोऽपि न भवति, नोपधग्रहणसामर्थ्यात्[3] ॥ **वचित्वेति ।** 'वञ्चु प्रलम्भने' ॥ **लुचित्वेति ।** 'लुञ्च अपनयने' ॥ **ऋतित्वेति ।** 'ऋतिः' सौत्रो धातुर्घृणार्थकः, तस्यार्धधातुकविषये 'ऋतेरीयङ्' इत्यस्य वैकल्पिकत्वात्तदभावे कित्त्वमनेन विकल्प्यते ॥ **तृषिमृषि— ।** 'ञितृषा पिपासायाम्', 'मृष तितिक्षायाम्', 'कृश तनूकरणे' । 'नोपधात्—' इत्यतो वेत्यनुवर्तनात्काश्यपग्रहणं पूजार्थम् ॥ **अञ्चेरिति ।** 'उदितो वा' इति विकल्पप्राप्तावयमारम्भः ॥ **अञ्चित्वेति ।** 'न क्त्वा सेट्' इति कित्त्वाभावान्नलोपो न । एवं चेह 'नाञ्चेः पूजायाम्' इति नलोपो नेति प्रसादकारोक्तिर्व्यर्थेत्याहुः ॥ **जॄव्रश्च्योः— ।** 'जॄ' इत्यस्मात् 'श्र्युकः किति' इति निषेधे प्राप्ते, व्रश्चेरूदित्वाद्विकल्पे प्राप्ते वचनमिदम् ॥ **जरीत्वेति ।** 'वॄतो वा' इति इटो वा दीर्घः ॥ **व्रश्चित्वेति ।** इह 'न क्त्वा सेट्' इति कित्त्वनिषेधाद् 'ग्रहिज्या—' इति संप्रसारणं न ॥ **द्यूत्वेति ।** इडभावपक्षे 'च्छ्वोः—' इत्यूठ् ॥ **झलादावितीति ।** 'जान्तनशाम्—' इति सूत्रे वक्तव्यमित्यर्थः ॥ **खात्वा । खनित्वेति ।** 'उदितो वा' इति वेट् ॥ **जग्ध्वेति ।** 'झरो झरि' इति पाक्षिको धलोपः ॥ **समासेऽनञ्— ।** नञ्भिन्नं नञ्सदृशमव्ययमिति यावत् । तत्पूर्वपदं यस्य समासस्येति व्याचष्टे—**अव्ययेति— । प्रकृत्येति ।** प्रशब्दः क्त्वाप्रत्ययार्थगतप्रकर्षस्य द्योतकः, स तु 'कुगतिप्रादयः' इति क्त्वान्तेन नित्यं समस्यते ॥ **पर्युदासेति ।** प्रसज्यप्रतिषेधाश्रयणे तु स्यादेवात्र ल्यबिति भावः ॥ **षत्वतुको— ।** प्रासङ्गिकषत्वविषयमुदाहरति—**कोऽसिचदिति ।** को असिचदिति स्थिते 'एङः पदान्तादति' इति पूर्वरूपमेकादेशः । तस्य 'अन्तादिवच्च' इति परादिवत्त्वेन 'सात्पदाद्योः' इति निषेधाभावादिणः परत्वेन षत्वं प्राप्तम् । एकादेशस्यासिद्धत्वे सति अकारेण व्यवधानादिणः परत्वाभा-

---

१ अञ्चुधातोरुदित्त्वाद् उदितो वेति विकल्पे प्राप्ते आह—अञ्चेः पूजायामिति ॥

२ अव्ययपूर्वपद इति—'विनापि प्रत्ययं पूर्वपदोत्तरपदयोर्लोपो वक्तव्यः' इत्यनेन पूर्वपदभूतस्याव्ययस्य लोपे क्वचित्केवलल्यबन्तमुत्तरपदमेव श्रूयते, यथा—'संध्यावधूं गृह्य करेण भानुः' जाम्बवतीविजये काव्ये व्याकरणाचार्यस्य पाणिनेः प्रयोगः ॥ समासघटकपूर्वपदभूताव्ययलोपमजानानेन नमिसाधुना त्वस्य प्रयोगस्याधुतैव रुद्रटालंकारव्याख्यायां प्रदर्शितेति सोऽविकृतबुद्धिरेव व्याकरणमर्मानभिज्ञत्वात् । रामायणभारतादिष्वार्षग्रन्थेषु त्वीदृशाः प्रायेण प्रयोगाः समुपलभ्यन्ते इति बोध्यम् ॥

३ नोपधग्रहणसामर्थ्यादिति—न च ऋफधातोः क्त्वाप्रत्यये विकल्पवारणाय नोपधग्रहणमस्त्विति वाच्यम्, द्वाविमौ धातू ऋफ ऋम्फेति, तत्राद्यस्य ऋफधातोः क्त्वाप्रत्ययेऽस्मिन् सूत्रे नोपधग्रहणे विकल्पस्य वारणेऽपि 'न क्त्वा सेट्' इति कित्त्वनिषेधेऽर्फित्वेति रूपम्, द्वितीयस्य 'नोपधात्—' इति विकल्पेन कित्त्वपक्षे ऋफित्वेति रूपमिति फलतो विशेषाभावेन नोपधग्रहणस्य तद्व्यावर्तकत्वाभावात् ॥

अधीत्य। प्रेत्य। ह्रस्वस्येति तुक्॥ (३३) वा ल्यपि।६।४।३८। अनुदात्तोपदेशानां वनतितनोत्यादीनामनुनासिकलोपो वा स्याल्ल्यपि व्यवस्थितविभाषेयम्। तेन मान्तानिटां वा नान्तानिटां वनादीनां च नित्यम्। आगत्य। आगम्य। प्रणत्य। प्रणम्य। प्रहत्य। प्रमत्य। प्रवत्य। वितत्य। अदो जग्धिः॥ (प०) अन्तरङ्गानपि विधीन्बहिरङ्गो ल्यब्बाधते। जग्धिविधौ ल्यब्ग्रहणात्। तेन हित्वदत्त्वाऽऽत्त्वेत्त्वदीर्घत्वश्चूडिटो ल्यपि न। विधाय। प्रदाय। प्रखन्य। प्रस्थाय। प्रक्रम्य। आपृच्छ्य। प्रदीव्य॥ (३३) न ल्यपि।६।४।६९। ल्यपि परे घुमास्थादेरीत्त्वं न। घेट्। प्रधाय। प्रमाय। प्रगाय। प्रपाय। प्रहाय। प्रसाय। मीनातिमिनोतीत्यात्त्वम्। प्रमाय। निमाय। उपदाय। विभाषा लीयतेः। विलाय। विलीय। णिलोपः। उत्तार्य। विचार्य॥ (३३) ल्यपि लघुपूर्वात्।६।४।५६। लघुपूर्वात्परस्य णेरयादेशः स्यात् ल्यपि। विगणय्य। प्रणमय्य। प्रबेभिदय्य। लघुपूर्वात्किम्। संप्रधार्य॥ (३३) विभाषापः।६।४।५७। आप्नोतेर्णेरयादेशो वा स्यात् ल्यपि। प्रापय्य। प्राप्य॥ (३३) क्षियः।६।४।५९। क्षियो ल्यपि दीर्घः स्यात्। प्रक्षीय॥ (३३) ल्यपि।६।१।४१। वेञो ल्यपि संप्रसारणं न स्यात्। प्रवाय॥ (३३) ज्यश्च।६।१।४२। प्रज्याय॥ (३३) व्यश्च।६।१।४३। उपव्याय॥ (३३) विभाषा परेः।६।१।४४। परेर्व्येञो वा संप्रसारणं स्यात् ल्यपि। तुकं बाधित्वा परत्वाद्धल इति दीर्घः। परिवीय। परिव्याय। कथं सुखं व्यादाय स्वपिति। नेत्रे निमील्य हसतीति। व्यादानसंमीलनोत्तरकालेऽपि स्वापहासयोरनुवृत्तेस्तदंशविवक्षया भविष्यति॥ (३३) आभीक्ष्ण्ये णमुल् च।

वाप्न भवति॥ प्रकृतं ल्यपि कार्यमुदाहरति—**अधीत्येति**॥ **विधायेति**। दधातेर्हिर्न॥ **प्रदायेति**। 'दो दद्घोः' इति न॥ **प्रखन्य**। 'जनसनखन-' इत्यात्त्वं न॥ **प्रस्थाय**। 'द्यतिस्यति' इतीत्त्वं न॥ **प्रक्रम्य**। 'क्रमश्च क्त्वि' इति दीर्घो न॥ **आपृच्छ्य**। **प्रदीव्य**। छकारवकारयोः 'च्छ्वोः-'इति शूठौ न। इडभावस्योदाहरणं तु प्रखन्य प्रदीव्येत्यादेव॥ **न ल्यपि**। कथं तर्हि 'निपीय यस्य' इति श्रीहर्षप्रयोग इति चेत्। अत्राहुः—'पीङ् पाने' इति दिवादिगणस्यात् ल्यपि न दोष इति। इह प्रशाय प्रच्छायेत्यत्र 'शाच्छोरन्यतरस्याम्' इति प्राप्तस्येत्त्वस्याप्यभावो बोध्यः॥ **लघुपूर्वादिति**। लघुः पूर्वो यस्माद्वर्णात्। लघुपूर्ववर्णात्परस्येत्यर्थः॥ **विगणय्येति**। नन्विह णौ कृतस्याल्लोपस्य पूर्वस्माद्विधौ स्थानिवद्भावाल्लघुपूर्वकवर्णात्परत्वं नास्ति। न चारम्भसामर्थ्यम्, अनुगमय्येत्यादौ मित्सु चारितार्थत्वात्। अत्रोच्यते—पूर्वस्माद्विधौ स्थानिवत्त्वमनित्यम्, 'निष्ठायां सेटि' इति लिङ्गात्। तथा चात्र स्थानिवत्त्वाभावाण्णेरयादेशो भवत्येव, 'निष्ठायां सेटि' इत्यस्यानित्यत्वज्ञापकत्वं तु 'अचः परस्मिन्—' इति सूत्रे एवास्माभिरुपपादितमिति नात्रोपपाद्यते॥ **प्रणमय्येति**। अमन्तत्वान्मित्त्वे 'मितां ह्रस्वः'॥ **प्रबेभिदय्येति**। भिदेर्यङन्ताद्बेभिद्येत्यस्माण्णिच्यल्लोपे 'यस्य हलः' इति यलोपः। ननु ह्रस्वयलोपाल्लोपानामाभीयत्वेनासिद्धत्वाल्लघुपूर्वकवर्णात्परो णिर्नास्तीति कथमिह णेरयादेशः स्यादिति चेत्। मैवम्, 'असिद्धवदत्राभात्' इत्यत्र समानाश्रये तस्मिन् कर्तव्ये तदसिद्धं स्यादिति हि व्याख्यातम्। तेनात्राशङ्कैव नास्ति। ह्रस्वादयो हि णौ, णेरयादेशस्तु ल्यपि परत इति व्याश्रयत्वात्॥ **विभाषापः**। अप्राप्तविभाषेयम्॥ **आप्नोतेरिति**। यद्यपीङो णिचि परतः 'क्रीङ्जीनां णौ' इत्यात्त्वे 'अर्तिह्री-' इत्यादिना पुकि आपितिशब्दोऽस्ति। तथापि तस्य नेह ग्रहणं, लाक्षणिकत्वादिति भावः॥ **प्राप्येति**। एतेन 'अयमयोगिवधूवधपातकैर्भ्रमिमवाप्य दिवः खलु पात्यते' इति श्रीहर्षप्रयोगो व्याख्यातः॥ अवाप्येत्यस्यावापय्येत्यर्थसम्भवात्। एतेन तत्रान्तर्भावितण्यर्थतेति क्लेशमनुभवन्तः परास्ताः॥ ल्यप्स्थानिनः कित्त्वात् 'वचिस्वपि-' इति प्राप्तसंप्रसारणं निषेधयितुमाह—**ल्यपि चेति**॥ **ज्यश्च**। संप्रसारणं न स्यात्। एवं 'व्यश्च' इत्यत्रापि व्याख्येयम्॥ **कथमिति**। ल्यबादेशस्य स्थानिभूतः क्त्वाप्रत्ययो दुर्लभः, तद्विधौ "पूर्वकाले" इत्युक्तेः। न चेह तदस्ति, पूर्वं ह्यसौ स्वपिति पश्चान्मुखं व्यादत्ते, यदैव हसति तदैव नेत्रे सम्मीलयति, तथा च क्त्वाप्रत्ययस्य दुर्लभत्वाल्ल्यपः प्रसक्तिरेव नास्तीति प्रश्नः॥ समाधत्ते—**व्यादानेत्यादिना**। एतेन 'ईश्वरः सर्वं व्याप्य वर्तते, ज्ञात्वा तिष्ठति' इत्यादि व्याख्यातम्। 'श्रीशैलशिखरं दृष्ट्वा पुनर्जन्म न विद्यते' इत्यादौ तु समानकर्तृकतानिर्वाहाय स्थितस्येत्यादि यथासंभवमध्याहार्यम्॥ **आभीक्ष्ण्ये णमुल् च**। ननु 'वासरूप-' न्यायेन क्त्वाप्रत्ययो भविष्यतीति चग्रहणमिह व्यर्थमिति चेत्। मैवम्, उक्तन्यायस्वीकारे तु लडादिरपीह प्रवर्तेत। न चेष्टापत्तिः, 'विभाषाग्रे-' इति वक्ष्यमाणसूत्रस्थविभाषाग्रहणस्य वैयर्थ्यप्रसङ्गात्। तत्र हि क्त्वाणमुलौ विभाषाग्रहणेन लडादिसमावेशार्थं विकल्प्येते। यद्यपि 'वासरूप-' न्यायेनैव लडादिः सिध्यति, तथापि 'णमुला सहैव क्त्वाप्रत्ययो यत्र विधीयते तत्र वासरूपविधिर्न प्रवर्तते' इति ज्ञापनार्थं विभाषाग्रहणम्। तत्फलं तु 'आभीक्ष्ण्ये णमुल् च' इत्यत्र लडाद्यप्रवृत्तिः। ततश्च चका-

१ **कथमिति**—मुखव्यादानस्य नेत्रनिमीलनस्य च स्वापहासोत्तरकालिकत्वेन पूर्वकालविशिष्टार्थवृत्तित्वाभावात्प्रश्नः। **तदंशविवक्षयेति**—एतेन विवक्षैव वक्तुः शब्दानां साधुत्वनियामिका,—यथा आदिकर्मणि निष्ठास्थले धात्वर्थैकदेशस्य स्थितावपि उत्पत्तिकालावच्छिन्नस्य कस्यचित् [illegible] निष्ठा भवति, तथा प्रकृतेऽपि स्वापहासयोर्यत्किंचिदवयवस्य मुखव्यादाने नेत्रनिमीलनोत्तरकालत्वेन तदंशापेक्षया पूर्वकालसम्बन्धिक्रियावचनत्वमादायाऽयं प्रयोग इत्युक्तम्॥

